| ग्रन्थनाम । | मूल्यम् । | |
|---|---|---|
| | रू० | आ० |
| ५७ औत्तरभूषणम्–हिरण्यकेश्याह्निकमोकोपाह्वत्र्यम्बककृतम् । | ४ | ६ |
| ५८ आचारेन्दुः–माटेइत्युपाह्वत्र्यम्बकविरचितः । ... | ४ | ० |
| ५९ श्राद्धमञ्जरी–केळकरोपाह्वबापूभट्टविरचिता । ... | २ | ० |
| ६० यतिधर्मसंग्रहः–विश्वेश्वरसरस्वतीकृतः । ... | १ | १२ |
| ६१ गौतमप्रणीतधर्मसूत्रम्–हरदत्तकृतटीकासमेतम् । ... | २ | ८ |
| ६२ ईशकेनकठप्रश्नमुण्डमाण्डूक्यानन्दवल्लीभृगूपनिषदः-सटीकाः | २ | ८ |
| ६३ छान्दोग्योपनिषत्–रङ्गरामानुजविरचितप्रकाशिकोपेता । | ३ | १२ |
| ६४ बृहदारण्यकोपनिषत्–रङ्गरामानुजविरचितप्रकाशिकोपेता । | ३ | ४ |
| ६५ शाङ्खायनब्राह्मणम्–ऋग्वेदान्तर्गतबाष्कलशाखीयम् । | १ | ४ |
| ६६ काव्यप्रकाशः–उद्द्योतयुतप्रदीपसहितः । ... ... | ६ | ४ |
| ६७ ब्रह्मसूत्राणि–दीपिकासमेतानि । ... ... ... | ४ | ८ |
| ६८ बृहद्ब्रह्मसंहिता–नारदपञ्चरात्रान्तर्गता । ... ... | १ | १२ |
| ६९ ज्ञानार्णवतन्त्रम्–ईश्वरप्रोक्तम् । तन्त्रशास्त्रग्रन्थः । ... | १ | ४ |
| ७० स्मृत्यर्थसारः–श्रीधराचार्यविरचितः । ... ... ... | १ | १० |
| ७१ बृहद्योगतरङ्गिणी–त्रिमल्लभट्टविरचिता भागद्वयोपेता । | १० | १२ |
| ७२ परिभाषेन्दुशेखरः–वैद्यनाथकृतगदाख्यटीकायुतः । ... | २ | ६ |
| ७३ गायत्रीपुरश्चरणपद्धतिः–श्रीमच्छंकराचार्यविरचिता । ... | १ | ८ |
| ७४ द्राह्यायणगृह्यसूत्रवृत्तिः–रुद्रस्कन्दप्रणीता । ... ... | १ | ० |
| ७५ ब्रह्मसूत्रभाष्यार्थरत्नमाला–सुब्रह्मण्यविरचिता । ... | ४ | ४ |
| ७६ ईशकेनकठोपनिषदः–दिगम्बरानुचरकृतव्याख्यासमेताः । | १ | ० |
| ७७ वेदान्तसूत्रमुक्तावलिः–ब्रह्मानन्दसरस्वतीविरचितः । ... | २ | ६ |
| ७८ त्रिस्थलीसेतुः–नारायणभट्टविरचितः । ... ... ... | ३ | १२ |
| ७९ छान्दोग्योपनिषत्–मिताक्षराव्याख्यासमेता । ... ... | २ | ० |
| ८० वाक्यवृत्तिः–श्रीमच्छंकराचार्यकृता सटीका । ... ... | ० | ८ |
| ८१ आश्वलायनश्रौतसूत्रम्–नारायणकृतवृत्तिसमेतम् । ... | ४ | ११ |
| ८२ ब्रह्मसूत्रवृत्तिः–हरिदीक्षितविरचिता । ... ... ... | २ | ७ |
| ८३ संक्षेपशारीरकम्–व्याख्यासहितं भागद्वयोपेतम् । ... | ९ | १ |
| ८४ अद्वैतामोदः–म. म. अभ्यंकरोपाह्ववासुदेवशास्त्रिप्रणीतः । | २ | ० |
| ८५ ज्योतिर्निबन्धः–गूरमहाठश्रीशिवराजविरचितः । ... | ३ | १५ |

आनन्दाश्रमसंस्कृतग्रन्थावलिः

ग्रन्थाङ्कः ९०

ऋग्वेदान्तर्गतं

# शाङ्खायनारण्यकम् ।

डेकनकॉलेजस्थगीर्वाणभाषाध्यापकैः पाठकोपाह्व-
श्रीधरशास्त्रिभिः प्रस्तावनापाठभेदादिभिः
संस्कृतं संशोधितं च

तद्

बी. ए. इत्युपपदधारिभिः

विनायक गणेश आपटे

इत्येतैः

पुण्याख्यपत्तने

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

शालिवाहनशकाब्दाः १८४३

खिस्ताब्दाः १९२२



मूल्यं नवाऽऽणकाः ( ०९ )

श्रीः।

# आदर्शपुस्तकनिर्देशपत्रिका।

शाङ्खायनारण्यकसंशोधनविषये प्राच्यविद्यासंशोधनमन्दिरात् ( भाण्डारकरीं. इंस्टि-टयूट ) सुगृहीतनामधेयानां डॉ० बेलवलकराणामनुमोदनेन लब्धानां पञ्चानां पुस्तकानां संज्ञास्तद्वर्णनं च प्रदर्श्यते। षष्ठं च कीथमहाशयमुद्रापितम्।

( भ )—संख्याङ्कः १८६८–६९ क्वचित्स्थले दुर्वाच्याक्षरम्। प्रायः शुद्धम्। संपूर्णम्। संवत् १७१४ इति लेखनकालः। पञ्चदशाध्यायात्मकम्। इदमेव पुस्तकमालम्ब्य मुद्रणार्थं पुस्तकं लिखितम्।

( ब )—संख्याङ्कः १८६८–६९ पृष्ठमात्रायुतम्। सामान्यतः शुद्धम्। सुवाच्यम्। अध्यायद्वयात्मकम्। संवत् १५७२ इति लेखनकालः।

( स )—संख्याङ्कः १८८४–८६ प्रथमाध्यायद्वयं नास्ति। सुवाच्यम्। शुद्धम्। संवत् १७४२ इति लेखनकालः।

( ख )—संख्याङ्कः १८६८–६९ पृष्ठमात्रायुतम्। अत्यन्ताशुद्धम्। सुवाच्यम्। संवत् १५०५ इति लेखनकालः।

( प )—संख्याङ्कः १८८६–९२ पृष्ठमात्रायुतम्। शुद्धम्। सुवाच्यम्। संवत १५७४ इति लेखनकालः।

( क )—कीथमुद्रापितम्। कीथमहाभागेनानेन प्रथमाध्यायद्वयमुपनिषदध्यायचतुष्टयमिति षडध्याया न मुद्रापिताः किंतु सप्तमाध्यायप्रभृतिपञ्चदशाध्यायपर्यन्तमेव मुद्रापितं तदपि न देवनागरलिप्या किंतु ट्रान्सलिटरेशनपद्धत्याऽऽङ्ग्ललिप्या।

अनेन महाभागेन पाठसयोजनार्थम् अ० ब० इति पुस्तकद्वयम् ए०बी०इत्याङ्ग्ललिपिबोधितसंज्ञाकं संगृहीतम्। तत्रत्या अपि शुद्धाः पाठा अस्माभिर्निवेशिताः। एवं चात्र पुस्तकेऽष्टपुस्तकस्थाः पाठाः संगृहीताः। अशुद्धाः केचनोपलब्धा अपि त्यक्ताः।

# अथ प्रास्ताविकं किंचित् ।

## १ वेदारण्यकयोः संबन्धः ।

विदितमेवेदं विचारशीलानां यद्दुःखजिहासासुखपरीप्सानिमित्तं प्राणभृतां प्रवृत्तिरिति । तत्र प्रायो बहव ऐहिकसुखार्थमेव यतन्ते न पारलौकिकाभ्युदयश्रेयोनिमित्तम् । केचित्तु लौकिकसुखस्यानित्यतां निरूप्य पारलौकिकाभ्युदयार्थं प्रयस्यन्ति परं तु नाधिगच्छन्ति तदुपायम् । तदर्थं परमेश्वरनिःश्वासभूतो वेदो नानाशाखामयो यज्ञादिसाधनान्युपदिदेश । ततः स्वर्गादिकं पारलौकिकसुखमपि 'यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयते' इत्यादिवचसा क्षयीति समधिगम्य केचन विरक्ताः परमश्रेयःसाधनभूतं ब्रह्म जिज्ञासवो बभूवुस्तदर्थं वेदेनैव कासुचिच्छाखास्वाद्युपनिषत्सु मन्त्रान्तर्गतासु ब्रह्मोपदिष्टम् । परं मन्त्रभागस्याऽऽख्यायिकादिरहितत्वेन मध्यममतीनां दुर्विज्ञेयत्वान्मन्त्राणां व्याख्यातृभिर्ब्राह्मणग्रन्थानां प्रणेतृभिस्तैस्तैर्महर्षिभिः कर्मकाण्डप्रतिपादनानन्तरमुपासनाघटितास्तास्ता उपनिषदः समाम्नाताः । एताश्चोपनिषदः प्रायो ब्राह्मणस्यान्तिमभाग आरण्यकेतिप्रथिते समुपलभ्यन्ते । आरण्यकानि च तत्तच्छाखासु तत्तन्नाम्ना प्रथितानि । माध्यंदिनशाखाया आरण्यकं बृहदारण्यकं तथैवाऽऽर्चिकशाखयोरारण्यके ऐतरेयारण्यकं शाङ्खायनारण्यकमिति च । तत्रैतरेयारण्यकं प्रागेवाऽऽनन्दाश्रममुद्रणालये मुद्रितम् । अधुना प्रवृत्तं शाङ्खायनारण्यकस्य मुद्रणं तदर्थं तद्विषयकं किंचिद्वितन्यते ।

## २ शाङ्खायनारण्यकमिति नामविचारः ।

अस्याऽऽरण्यकस्य द्वे संज्ञे प्रथिते । तत्र प्रथमा कौषीतक्यारण्यकमिति । द्वितीया शाङ्खायनारण्यकमिति । सर्वेषु पुस्तकेषु सर्वत्रोपलभ्यमानेषु शाङ्खायनारण्यकमित्येव नामोपलभ्यते केवलं कॉवेलनिर्दिष्टपुस्तके मुखपृष्ठे कौषीतक्यारण्यकमिति लिखितमुपलभ्यते । अत्राऽऽरण्यके मध्ये मध्य उपदेष्टृप्रसङ्गेन कौषीतकिनाम दरीदृश्यते तेन तन्नाम्नैवाऽऽरण्यकमिदं प्रसिध्यात्विति कस्यचिदुक्तिः परं नैषा विचारक्षोदक्षमा । यतोऽन्येषामप्यारुण्यादीनां महर्षीणामुपदेष्टृत्वेन वर्ततेऽत्र निर्देशः । तेन तन्नाम्नेदमारण्यकं प्रसिध्यत्विति शङ्काऽपि संभवेत् । अतः शाङ्खायनेति सर्वपुस्तकेषु दृश्यमानमस्य नाम वरीयः । कॉवेलनिर्दिष्टपुस्तके तु भ्रमान्मुखपृष्ठे तथा लेखः संभवति । अयं च भ्रम एतदारण्यकगतोपनिषदः कौषीतक्युक्तत्वेन ( अ. ४ ) कौषीतक्युपनिषदिति संज्ञा तज्ज यः । तथाहि

कौषीतकिनोपदिष्टत्वादियमुपनिषत्कौषीतक्युपनिषत् । सा च यत्राऽऽरण्यक उपलभ्यते तदपि कौषीतक्यारण्यकमिति लेखकस्य भ्रमस्तन्मूलो लेखो मुखपृष्ठे पूर्वोक्तपुस्तके । अनया रीत्या प्रथमाया. सञ्ज्ञाया भ्रमजन्यत्वाद्द्वितीया शाङ्खायनेति सञ्ज्ञैवाऽऽदरणीया । तत्र च प्रकृष्टं साधकम्—पञ्चदशेऽध्याये वंशकथनात्मके प्रथमोपदेष्टृत्वेन शाङ्खायनस्योक्तिः। अनेनैव महात्मना समुदायशः शिष्यान् प्रत्यध्यापितमिदमारण्यकम् । तत्पर्यन्तं तु सर्वे-रेकैकं प्रत्यध्यापितमतो न तन्नाम्ना प्रथितिः । एवं च सिद्धमस्याऽऽरण्यकस्य नाम शाङ्खा-यनमिति तदेवास्माभिरादृतमुपलब्धपुस्तकान्तरसंवादात् । एतस्य चारण्येऽनूच्यमानत्वादार-ण्यकमिति व्यवहारः । यथा—ऐतरेयारण्यकम् । बृहदारण्यकमिति ।

## ३ अध्यायविचारः ।

अत्राऽऽरण्यके पञ्चदशाध्याया सन्ति। तत्र प्रथमौ द्वौ ख. प. ब. इति पुस्तकरीत्या ब्राह्मणभागौ । यतस्तत्र पुस्तकेषु प्रथमाध्यायान्ते शाङ्खायनब्राह्मणे महाव्रतं नामैकत्रिंश-त्तमोऽध्याय इति । द्वितीयाध्यायान्ते कौषीतकिब्राह्मणे महाव्रतं नाम द्वात्रिंशत्तमोऽध्याय इति च निर्देश उपलभ्यते । एवं च पूर्वोक्तपुस्तकरीत्या ब्राह्मणस्य द्वात्रिंशदध्यायास्तेनाव-शिष्टास्त्रयोदशाऽऽरण्यकगता. । अधुना तु ब्राह्मणस्य त्रिंशदेवाध्याया अन्यत्र पुस्तकेषूप-लभ्यन्ते । तथैवाऽऽनन्दाश्रमपुस्तके ( ग्रं० ६५ ) मुद्रिताः । वस्तुतस्तु प्रथमद्वितीया-ध्याययोर्ब्राह्मणगतत्वं न प्रमाणपदवीमारोढुमर्हति । यतस्तत्राध्याययोर्महाव्रतं प्रतिपाद्यते । तस्याऽऽरण्यकगतत्वमेवोचितम् । किमिति चेदेतत्सजातीयैतरेयारण्यके महाव्रतस्य प्रथमं ग्रहणं सर्वपुस्तकसमतं नैतरेयब्राह्मणे । तद्वदत्रापि तथैव निर्देश उचित । अग्रिमत्र-योदशाध्यायास्तु निर्विवादमारण्यकरूपा एव । अस्मदुपलब्धपुस्तके द्वितीयाध्यायान्ते कौषीतकिब्राह्मणेत्युक्तिरपि पूर्वोक्तभ्रमजन्यैव । यतो ब्राह्मणस्यापि शाङ्खायनेति नामैव युक्तम् । अतस्तदेवाऽऽदृतमानन्दाश्रममुद्रितपुस्तके ( ग्रं० ६५ )। आश्वलायनगृह्यसूत्रे तु शाङ्खायनमित्यस्य स्थाने सांख्यायनमिति सकारयुतः पाठ उपलभ्यते । सर्वपुस्तकसंम-त्याऽस्माभि. शकारघटितः पाठ आदृत. ।

## ४ अध्यायार्थविचारः ।

अध्यायः

१ महाव्रतवर्णनं तदनुष्ठानप्रकारश्च ।

२ हिंकारवर्णनं तत्प्रकारश्च ।

३ चित्रो गाङ्ग्यायनिस्तत्त्वज्ञानविषये श्वेतकेतुं पृष्टवान् । तदा तदुत्तरासमर्थः स श्वेतकेतुः पितरमारुणिं तन्निर्णयार्थं जगाम । तत्र आरुणिना सविस्तरं ज्ञानमुपदिष्टम् ।

४ कौषीतकिपैङ्ग्यशुष्कभृङ्गारोक्ताः कल्पाः । ततोऽहंश्रेयसे विवदमानानामिन्द्रियाणामाख्यायिका । तत्र प्राणश्रैष्ठ्यसिद्धिः । अथ च पितापुत्रीयं संप्रदानम् ।

५ प्रतर्दनस्य दैवोदासेरिन्द्रस्य च तत्त्वज्ञानविषयकः संवादः ।

६ गार्ग्यस्य बालाकेः काश्यस्याजातशत्रोश्च ब्रह्मविषयकः संवादः ।

७ संहितोपनिषदत्राध्याये विविधप्रकारैर्वर्णिता ।

८ प्राणस्य वंशादिरूपेणोपासनम् । शरीरपुरुषच्छन्दःपुरुषवेदपुरुषमहापुरुषेति चतुर्णां पुरुषाणां वर्णनम् । अथ च संहितोपनिषदुपसंहारः ।

९ ज्येष्ठत्वश्रेष्ठत्वगुणद्वारा प्राणोपासनं प्रजापतेरिन्द्रियाणां च संवादपूर्वकं प्राणस्य श्रैष्ठ्यं प्रतिपादितम् । अथ च महाजिगमिषोः कल्पः ।

१० आध्यात्मिकस्याग्निहोत्रस्य वर्णनम् ।

११ प्रजापतिनाऽग्न्यादिदेवतानां पुरुष आवेशनम् । ततः स्वप्नाः । तत्सूचितफलं च । अनन्तरं पूर्वोक्तस्वप्नसूचितानिष्टफलनिवृत्त्यर्थं होमरूपं शान्तिकर्म प्रतिपादितम् । आशीःप्रार्थनं च ।

१२ पूर्ववदाशीःप्रार्थनं फलकथनं च । ततो भूतिकामस्य मणिकल्पस्तदनुष्ठानप्रकारश्च ।

१३ अथ वैराग्यसंस्कृतशरीरेण पुरुषेणाऽऽत्मनः श्रवणमनननिदिध्यासनानि संपादनीयानीति विधाय तत्स्वरूपं प्रतिपादितम् ।

१४ ऋगादिवेदत्रयशिरसामनध्येतुरनर्थज्ञस्य च निन्दा ।

१५ गुरुपरम्परारूपो वंशः शाङ्खायनमारभ्य स्वयंभूब्रह्मपर्यन्तं कथितः ।

बृहदारण्यकादिवदत्रापि पूर्वं काश्चनोपासनाः । अथ चोपनिषद् । इयं कौषीतकिनोक्ताऽतः कौषीतक्युपनिषदितिसंज्ञिका । कचित्संहितोपनिषदित्यपि भण्यते । तथा चैतरेयोपनिषद्भाष्ये भगवत्पूज्यपादश्रीशंकराचार्यैः—तथा च संहितोपनिषदि, इत्युक्तम् । ततः परं केचन कल्पाः । तथैवैकादशेऽध्याये—अथ स्वप्नाः—इत्यारभ्यानिष्टफलमरणादिसूचकाः स्वप्ना दर्शितास्ते जिज्ञासून्प्रतीवोपकरिष्यन्ति ।

## ५ शाङ्खायनारण्यकमैतरेयारण्यकानन्तरभावीतिमतनिरासः ।

बहुशः शाङ्खायनारण्यकमैतरेयारण्यकेन सह संवदति । ऐतरेयारण्यके प्रथमं महाव्रतवर्णनं तद्वदत्रापि । एवं न केवलमर्थसाम्यमेव किंतु शब्दसाम्यमपि । तच्च शाङ्खायनारण्यकस्य सप्तमाष्टमाध्याययोरैतरेयारण्यकस्य तृतीयाध्याये स्पष्टं दरीदृश्यते । तथैवात्रत्या संहितोपनिषत्संहिताग्रन्थेन सह संवदति । इमं संवादमालोच्य केचन कीथप्रभृतयो विदेशीयाः पौर्वापर्यदृष्टिमवलम्ब्याऽऽरण्यकमिदमैतरेयारण्यकानन्तरभावीत्यनुमिमते । परं तन्न विचारसहम् । यतः शाखाभेदेनोभयोरारण्यकयोर्भेदः । तथाहि—ऋग्वेदशाखासु शाखाद्वयगते इमे द्वे आरण्यके । शाङ्खायनमिति, ऐतरेयकमिति च । तयोरेकवेदशाखागतत्वेन संवादोऽवश्यंभावी । यतः समानवेदगतशाखानां शब्दार्थयोः संवादः सर्वत्र ब्राह्मणे संहितायामारण्यके च दृश्यते । अत्रार्थे दृष्टान्तः—बृहदारण्यकम्, शतपथब्राह्मणम्, काण्वमाध्यंदिनसंहिते च । काण्वपाठो माध्यंदिनपाठश्च बृहदारण्यके भिन्नस्तथाऽपि बहुषु स्थलेषु शब्दार्थयोः संवादः । श्रीमद्भगवत्पूज्यपादश्रीशंकराचार्यैः काण्वपाठ आदृतो बृहदारण्यकोपनिषद्व्याख्यायां तथाऽपि शाखान्तरानुरोधादत्रैवमर्थः कार्य इत्युक्तम् । तथैव ब्रह्मसूत्रभाष्येऽपि तैः शाखाद्वयमुररीकृत्य व्याख्यायि । सूत्रकारश्रीमद्बादरायणचरणैरपि—'अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम्' (३-३-५५) तथा 'मन्त्रादिवद्वाऽविरोधः' (३-३-५६) इति सूत्रपङ्क्तिः क्वचित्स्थले पाठभेदं प्रकटय्योभयोः शाखयोः पार्थक्यं परस्पराननुयायित्वेन च स्वातन्त्र्यमङ्गीकृतं न तु शब्दार्थसाम्यादेतदनन्तरभाविनीयमुपनिषदारण्यकं ब्राह्मणं वेति गदितम् । यदि तथा तन्मतं स्यात्तर्हि तया शाखयेयं शाखा व्याख्यातेति वदेयुस्तथा तु नोक्तम् । किंचाभ्युपगम्य वादेऽपि यथा शब्दार्थसामान्यादैतरेयारण्यकानन्तरभावि शाङ्खायनारण्यकं तथा तस्मादेव कारणादविनिगमनाविरहादैतरेयारण्यकमेव कुतो न शाङ्खायनारण्यकानन्तरभावीति वादी प्रष्टव्यः । एवं च सुन्दोपसुन्दन्यायेनोभयोरपि पौर्वापर्यं निहन्यते ।

सिद्धान्तस्तु शाखानुयायिनां यच्छाखाभेदेनाऽऽरण्यकद्वयमपि तत्तदृषिप्रणीतं स्वस्वकाम्यानुरोधि । शब्दार्थसाम्यं तु व्याख्यायमानसंहिताशब्दार्थसाम्यानुबन्धि । आरण्यकं ब्राह्मणान्तिमभागः । ब्राह्मणं च संहिताव्याख्यानरूपम् । एतत्सविस्तरं पूर्वमेव प्रतिपादितं वेदारण्यकयोः संबन्ध इति प्रकरणे । तथाच संहितायां यथा शब्दार्थसाम्यं तथा तद्व्याख्यायां दृश्यते । क्वचित्क्वचिद्भेदोऽस्तीति वादिनाऽप्यभ्युपगम्यते । इयमेव गतिर्बृहदारण्यकादिसंवादस्य तदनुरोध्यनुमानस्य चेति ।

## । ६ कौषीतक्युपनिषदः प्राचीनत्वम् ।

अस्मिन्नारण्यक उपनिबद्धा कौषीतक्युपनिषन्नातीव प्राचीनेति पूर्वोक्तविदेशीयानां मतम् । तदप्यविचारितरमणीयम् । यतो वादी यासामुपनिषदां प्राचीनत्वमङ्गी कुरुते ताभिः सहैवोपनिषत्कुसुमग्रथनार्थेषु बादरायणसूत्रेष्वस्या निर्देशेन बादरायणसमस्योपनिषदस्तत्परप्राचीनत्वं स्पष्टम् । तथाच बादरायणसूत्रम्–' जगद्वाचित्वात् '(१ । ४ । १६) अत्र कौषीतक्युपनिषद्वचो विषयवाक्यत्वेन प्रमाणवाक्यत्वेन च गृहीतम् । तथैव 'अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके' (१ । ४ । १८) 'वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथाहि दर्शयति' (२ । १ । ३४) इति सूत्रयोरपि विषयवाक्यत्वेन प्रमाणवाक्यत्वेन च ग्रहणम् । अत्र भाष्यकृद्भिस्तथैव व्याख्यातम् ।

## ७ निर्दिष्टदेशाः ।

अत्राऽऽरण्यके षष्ठाध्याये प्रथमकाण्डिकायां गार्ग्यस्य बालाकेः स्थितिदर्शनेषु मत्स्येषु कुरुपाञ्चालेषु काशिविदेहेषु गदिता । एते च सर्वे देशा मध्यदेशे । मध्यदेशस्य वर्णनमैतरेयब्राह्मणे । तत्र पूर्वोक्ताः कुरुपाञ्चालादयो गदितास्तेन शाखाद्वयगतं ब्राह्मणमारण्यकं च मध्यदेश एव प्राणायीत्यनुमातुं शक्यते ।

## ८ निवेदनम् ।

एतदारण्यकं नाद्यावधि समग्रं क्वापि मुद्रितम् । तदेतदालोच्यास्माभिः पुस्तकाष्टकमवलम्ब्य यथामति संस्कृत्य मुद्रापितम् । मुद्रणसंस्कारेषु वैदिकमन्त्राङ्कदानं महता श्रमेण संपादितम् । अत्राऽऽरण्यक उपलभ्यमाना मन्त्रा अवश्यं शाङ्खायनसंहितास्था भवेयुस्तेन तत्संहितास्था अङ्कास्तत्र समुचिताः । किंतु गुर्जरादिदेशेषु वार्ताहरादिप्रेषणेन तत्संहितोपलब्धौ बहुशः प्रयतमानैरप्यस्माभिर्न प्रापि कार्तार्थ्यम् । तेन शाकलसंहितास्था एव मन्त्रेष्वङ्का मुद्रिताः । मन्त्राश्चाधोरेखया चिह्निताः । केचन मन्त्राः शाकलसंहितायां नोपलभ्यन्ते तेऽधोरेखाङ्किता निरङ्का एव मुद्रिताः । अङ्कक्रमस्तु–अष्टकम् , अध्यायः, वर्गश्चेति । प्रास्ताविके किंचिद्विवेचितं विदेशीयमतं प्रदर्श्य—अतोऽप्यधिकं तत्रास्ति मीमांस्यं किंतु यन्मतं विचार्यं तत्तत्प्रणेतृशब्दैः प्रदर्श्य खण्डनीयमिति मीमांसकसंप्रदायः । अत्राऽऽरण्यके विदेशीयेन कीथमहाशयेन बहु प्रपञ्चितमाङ्ग्लभाषायाम् । आनन्दाश्रममुद्रणालये तु–आङ्ग्लभाषया किमपि न मुद्रणीयमिति नियमस्तेन मूलमतप्रतिपादनस्याशक्यत्वात्तद्विचारोऽपि परिहरणीयतामगतः । अतः सोऽयं विचारः पुनः कदाऽपि क्रियेत ।

पाणिदस्तसंबन्धज्ञानुसारी पाश्चात् विचारसरणीन् पूर्वं प्रदर्शित एव । आनन्दाश्रममुद्रणालयाधिपतिभिर्विनायकराव आपटे महाभागैरेवद्यारण्यकं मुद्रयित्वा जगति प्रसृतमिति मन्ये । तस्यैतस्याऽऽरण्यकस्य संशोधने ' आगाशे ' इत्युपाह्वकाशीनाथशास्त्रिभिर्बहु प्रयतितम् । तथा चायमनुपलब्धस्य पाठविलासस्य ग्रन्थस्याऽऽलोचनेन कृतार्थयन्तु विद्वांस आत्मानमिति सविनयमावेदयति—

विद्वद्वंशवदः पाठकोपाख्यः श्रीधरशर्मा
( डेक्कन्कॉलेज्-संस्कृतप्राध्यापकः )

ॐ तत्सद्ब्रह्मणे नमः ।

# अथ ऋग्वेदे शाङ्खायनारण्यकम् ।

हरिः ॐ

श्रीसरस्वत्यै नमः ॥ ॐ प्रजापतिर्वै संवत्सरस्तस्यैष आत्मा यन्महाव्रतं तस्मादेनत्परस्मै न शंसेन्नेत्सर्वेषां भूतानामात्मानं परस्मिन्दधानीत्यथो इन्द्रस्यैष आत्मा यन्महाव्रतं तस्मादेनत्परस्मै न शंसेन्नेदिन्द्रस्याऽऽत्मानं परस्मिन्दधानीत्यथो यमेवैतमृङ्मयं यजुर्मयं साममयं पुरुषं संस्कुर्वन्ति तस्यैष आत्मा यन्महाव्रतं तस्मा-[२]देनत्परस्मै न शंसेन्नेत्सर्वेषां छन्दसामात्मानं परस्मिन्दधानीति कामं तु सत्रिणां होता शंसेत्पित्रे वाऽऽचार्याय वाऽऽत्मने हैवास्य तच्छस्तं भवत्यात्मनैव तद्यज्ञं समर्धयति तस्य पञ्चविंशः स्तोमश्चतुर्विंशतिर्वै संवत्सरस्यार्धमासाः संवत्सरस्यैवाऽऽप्त्या अथो प्रजापतिर्वै संवत्सरः पञ्चविंशोऽथो चतुर्विंशो वै पुरस्तात्कृतो भवति तस्यैषा गतिर्यत्पञ्चविंश ऐन्द्रश्च ऋषभः प्राजापत्यः प्राज उपालम्भ्यावैन्द्रं वा एतदहरिन्द्र उ वै प्रजापतिस्तत्प्राजापत्यं रूपमथो एतदेव पशुष्वैन्द्रं रूपं यदृषभः ॥ १ ॥

तस्य विशो विशो वो अतिथिमिति द्वादशर्चमाज्यं द्वादश वै मासाः संवत्सरः संवत्सरस्यैवाऽऽप्त्यै तस्मिन्वै द्वे छन्दसी भवतो गायत्र्यश्चानुष्टुभश्चाग्निं नरो दीधितिभिररण्योरित्येतत्पञ्चविंशत्यृचमुपसंशंसति पञ्चविंशो हि स्तोमस्तद्धि सर्वं समृद्धं यत्स्तोमेन संपद्यते तस्मिन्वै द्वे छन्दसी भवतो विराजश्च त्रिष्टुभश्च तानि चत्वारि संपद्यन्ते चतुष्टयं वा इदं सर्वमस्यैव सर्वस्याऽऽप्त्यै त्रैष्टुभः प्रउग

१ ( ६ । ५ । २१ ) २ ( ५ । १ । २३ )

* सांख्यायनगोत्रे गृह्यसूत्रपाठ ।

१ घ. 'दैतत्' । २ ख. 'पशभ्य' ।

इन्द्रस्यैवैतच्छन्दो यत्त्रिष्टुबेनं स्वेन च्छन्दसा समर्धयति प्रेवि-
दङ्ग नमसा ये वृधाम इति वायव्यं महद्वद्वृद्धवन्महद्वन्महद्वद्ध्ये-
तदहरेत एवोत्तरं तृचमैन्द्रवायवं यौवत्तरस्तन्नो यावदोज इति
यौवत्तरश्चक्षसा दीध्याना इत्येतेन रूपेणोद्वा- चक्षुर्वरुण सुप्रतीक-
मिति मैत्रावरुणमावयोरेति सूर्यस्तनन्वानित्येतेन रूपेण कं उ
श्रवस्कृतमो यज्ञियानामित्याश्विनं यं सूर्यस्य दुहिता वृणीतेत्ये-
तेन रूपेण कथामहामवृधत्कस्य होतुरित्यैन्द्रं महद्वद्वृद्धवन्महद्व-
न्महद्वद्ध्येतदहः को वेस्त्राता वसवः को वरूतेति वैश्वदेवं सहीयसो
वरुण मित्र मर्तादित्येतेन रूपेणोत स्यां नः सरस्वती जुषाणेति
सारस्वतं द्वौराषृतस्य सुभगे व्यावादित्येतेन रूपेणैष वा उ कद्वा-
त्रैष्टुभस्तृचवत्प्रउगो वामदेव्यः प्रउगः प्रजापतिर्वै वामदेवः प्रजापतावेव
तत्सर्वान्कामानृध्नुवन्ति तदाहुर्न त्रैष्टुभं प्रातःसवनं स्यात्मोहयति
चल्हृतं छन्दसो यज्ञमुखमैकाहिकमेव स्याद्ब्रह्म वा एकाहो ब्रह्मै-
तदहर्ब्रह्मण्येव तद्ब्रह्म समर्धयति ॥ २ ॥

आ त्वा रथं यथोतय इति मरुत्वतीयस्य प्रतिपदिदं वसो
सुतमन्ध इत्यनुचर एष एव नित्य एकाहानामस्त्स्योक्तं
ब्राह्मणमसौंस्तु मे जरितः साभिवेग इति वासुक्रं पूर्वं शस्त्वा
महाँ इन्द्रो नृवदाचर्षणिप्रा इत्येतस्मिंस्त्रैष्टुभे निविदं दधाति
तद्यद्वासुक्रं पूर्वं शंसतीन्द्र उ वै वसुक्रोऽथ यन्महाँ इन्द्रो नृवदाचर्षणि-
प्रा इति महद्वन्महद्वद्ध्येतदहः ॥ ३ ॥

अथैता आज्याहुतीर्जुहोति स्वस्त्ययनमेव तत्कुरुते यज्ञस्यैव
शान्त्यै यजमानानां च भिषज्यायै ता वा अष्टौ भवन्त्येताभिर्वै देवाः
सर्वा अष्टीराश्नुवत तथो एवैतद्यजमाना एताभिरेव सर्वा अष्टी-

---

१ (५ । ६ । १२ ) २ ( ५ । ६ । १३ ) ३ ( ५ । ६ । १३ ) ४ ( ५ । ५ । ३ ) ५ ( ५ । ५ । ३ ) ६ ( ३ । ७ । १९ ) ७ ( ३ । ७ । १०. ) ८ ( ३ । ६ । ९ ) ९ ( ३ । ८ । ६ ) १० ( ३ । ८ । ६ ) ११ ( ५ । ५ । १९ ) १२ ( ५ । ६ । १९ ) १३ ( ६ । ५ । १ ) १४ ( ५ । ७ । १७ ) १५ ( ७ । ७ । १५ ) १६ ( ४ । ६ । ७ ) १७ ( ४ । ६ । ७ )

रश्नुवतेऽथैतान्परिमादाञ्जपाञ्जपति परिमाद आपो वै परिमादोऽद्भिर्हीदं सर्वं परिमितमथ यै परिमादोऽन्नमेतदुक्थमापो वा अन्नस्याऽऽयतः पूर्वा आयन्त्यापः परिमादोऽथ वै परिमादो यच्छ्वासानि दन्तास्तनूर्लोमानीति तस्मात्कृत्स्नाः संपद्वत्यो हि भवन्ति पञ्चविंशतिर्निधनमाङ्गिरसं प्रतिष्ठायै तद्रूपं सूक्ते छन्दांसि साममियमिन्द्रस्य धामोपजगामेति क्रोशानुक्रोशे अरात्सुरप्येषां ययोऽरात्सुरकं चार्कपुष्पं चार्पं वा अग्निरर्कोऽसावादित्योऽर्कपुष्पं तेषु यदा पर्यायं सामगाः स्तुवतेऽथ होतारमाहुरनुजपेति से यदि स्तुवीरन्यदि न स्तुवीरन्नेव जपेत् ॥ ४ ॥

तानि वा एतानि सप्त देवच्छन्दांसि भवन्ति तस्मादेनाननुजपेदथो ऐन्द्रं वा एतदहरैन्द्रा जपास्तस्मादेनाननुजपेदथात्रैव तिष्ठन्नपि यथाङ्गमुपतिष्ठते नमो नम इति नहि नमस्कारमतिदेवाः समिद्धस्यैवैतान्भागाननुवातिष्ठेत यद्युत्तरवेदौ भवत्यथात्रैव तिष्ठन्नादित्यमुपतिष्ठेत आकाशं श्वालायं कुर्युरिति हैक आहुर्दैवो नचैवोपतिष्ठेत तिरोहितो ह वा एष एतस्मिन्परमपुच्छे परम आशिषो वदाति सं महान्महत्त्वादधादित्यग्निर्वै महानियं पृथिवी महत्येतौ हि समधत्तां सं देवो देव्यादधादिति वायुर्वै देवोऽन्तरिक्षं देव्येतौ हि समधत्तां सं ब्रह्म ब्राह्मण्यादधादित्यसावादित्यो ब्रह्मासौ द्यौर्ब्राह्मण्येतौ हि समधत्तां तद्यावन्मंदधात्येतदुक्तं शंसिष्यत ॥ ५ ॥

विश्वामित्रो ह्वा इन्द्रस्य प्रियं धामोपजगाम शस्त्रेण च व्रतचर्यया तं हेन्द्र उवाच विश्वामित्र वरं वृणीष्वेति स होवाच विश्वामित्रस्त्वामेव विजानीयामिति द्वितीयमिति त्वामेवेति तृतीयमिति त्वामेवेति तं हेन्द्र उवाच महांश्च महती चास्मि देवश्च देवी चास्मि ब्रह्म च ब्राह्मणी चास्मीति तत उ ह विश्वामित्रो विजिज्ञासामेव चक्रे तं हेन्द्र उवाचैतद्वा अहमस्मि यदेतदवोचं यद्वा कृपतो भूयोऽप्यतस्तदेव तत्स्यादहमिति तद्वा इन्द्रो व्याहृतीरूचे ता अपाक्षा आसन्निरथयोपानिधाय मेढ्रफलकं निरभ्यं न्यत्रिरभ्यवानीति ॥ ६ ॥

तद्वा उदुम्बरं भवत्यूर्ग्वाऽन्नाद्यमुदुम्बर ऊर्जोऽन्नाद्यस्योपाप्त्या अथैनदुरसा संस्पृश्य दक्षिणं भागमात्मनोऽभिहरन्नुपतत्यर्कोऽसि

वसवस्त्वा गायत्रेण च्छन्दसाऽऽरोहन्तु तेऽस्त आरोढार इत्येव तदाह तानहमन्वारोहामि राज्यायेति राज्यं ह वा इदमु हैव चक्षतेऽथोत्तरं भागमात्मनोऽतिहरञ्जपति रुद्रास्त्वा त्रैष्टुभेन च्छन्दसाऽऽरोहन्तु तेऽस्त आरोढार इत्येव तदाह तानहमन्वारोहामि स्वाराज्यायेति स्वाराज्यं ह वै राज्यादधितरामिवाथ दक्षिणं भागमात्मनोऽतिहरञ्जपत्यादित्यास्त्वा जागतेन च्छन्दसाऽऽरोहन्तु तेऽस्त आरोढार इत्येव तदाह तानहमन्वारोहामि साम्राज्यायेति साम्राज्यं ह वै स्वाराज्यादधितरामिवाथोत्तरं भागमात्मनोऽतिहरञ्जपति विश्वे त्वा देवा आनुष्टुभेन च्छन्दसाऽऽरोहन्तु तेऽस्त आरोढार इत्येव तदाह तानहमन्वारोहामि कामप्रायेति कामप्र ह वै सर्वेषां परार्ध्यमथ समधिसृप्य प्राञ्चौ पादौ उपावहृत्य भूमौ प्रतिष्ठापयत्युद्धततरो ह वा एषोऽस्माल्लोकाद्भवति यद्यत्प्रतिष्ठापयति तदस्मिँल्लोके प्रतितिष्ठति प्रतिष्ठायामप्रच्युत्यामथ त्रिरभ्यं यत्रिरभ्यवानित्यथोपरि प्रेङ्खफलके दक्षिणोत्तरिणमुपस्थं कृत्वा दक्षिणेन पादेन पश्चात्प्राङ् प्रेङ्खफलकमुपस्पृशति प्रजापतिष्ट्वाऽऽरोहतु वायुः प्रेङ्खयत्वीति प्रजापतिर्वा एतदारोहतु वायुः प्रेङ्खयति यज्जीवमथ त्रिरभ्यं यत्त्रिरभ्यवानित्यथ प्राञ्चौ पाणी परिगृह्य जपति ॥ ७ ॥

सं प्राणमाणेन समहं प्राणेन सं चक्षुर्मनसा समहं मनसा सं प्रजापतिः पशुभिः समहं पशुभिरित्याशिषमेव तद्वते सुपर्णोऽसि गरुत्मानिति प्राणो वै सुपर्णः प्रेमां वाचं वदिष्यामीति प्रवादिष्यन्नेष एतां वाचं वदति बहु करिष्यन्तीं बहु करिष्यामीति बहुर्ह्येषा वाक्करिष्यन्ती भवति बह्वयं य एतस्याः शस्त्रं प्राप्नोति भूयो भूयः करिष्यन्तीं भूयोभूयः करिष्यामीति भूयोभूयो ह्येषा वाक्करिष्यन्ती भवति भूयोभूयोऽयं य एतस्याः शस्त्रं प्राप्नोति स्वर्गमिष्यन्तीं स्वर्गमिष्यामीति स्वर्गं ह्येषा वाग्गमिष्यन्ती भवति स्वरयं य एतस्याः शस्त्रं प्राप्नोति स्वर्गमान्यजमानान्वक्ष्यामीत्येव भूयासं द्विष्यासं भूयासमहं नाभुमिति स यावतो ह वा एष एतस्मादेवरायात्मनिमंख्यायं निर्धुनुते तिष्ठद्गुन्षे तौ ह न प्रेप्सन्ते प्रवत्स्यत्पैतन्मप्रपद्यनि नपैवैतन्य रय्याऽऽत्मन्वत्ते वायुर्वा एष प्राणो

---

१ क. 'वर (र' । २ घ. प्रेप्सारे ।

भूत्वैतदुक्थं शंसति तमेवैतत्समर्पयति तमेवैतत्सम्पर्ध्याऽऽत्मन्धत्ते गुरौ वा एष युक्तो भवति य एतस्याह्न शस्त्रं प्राप्नोति तस्य गुरौ युक्तस्येश्वरः प्राणो यदि नापः पराजेतोस्तमेवैतत्समर्पयति तमेवैतत्सम्पर्ध्याऽऽत्मन्धत्ते न ह वा एतस्यै देवतायै दिग्धेन नासिना न परशुना न फेनचनावतर्दोऽस्ति तथ एवं विद्वासमर्पयदाति स एव पापीयान्भवति न स य एवं वेद नैवं विदुषोऽवतर्दो नैवं विदुषोऽवतर्दे ॥ ८ ॥

॥ इति शाङ्खायनारण्यके प्रथमोऽध्यायः समाप्तः ॥

---

अथ द्वितीयोऽध्यायः ।

---

ॐ हिंकारेण प्रतिपद्यत एतदुक्थं प्राणो वै हिंकारः प्राणेनैवैतदुक्थं प्रतिपद्यतेऽथो ऊर्जं रसो हिंकार ऊर्जमेवैतद्रसमेतस्मिन्नुक्थे दधात्यथो अमृतत्वं वै हिंकारोऽमृतत्वमेव तदात्मन्धत्ते राजनं पृष्ठं भवत्येतद्वै प्रत्यक्षं साम यद्राजनं तदेनं स्वेन साम्ना समर्पयति तदनिरुक्तासु भवत्यनिरुक्त उ वै प्रजापतिस्तत्प्राजापत्यं रूपं कवतीषु स्यादिति हैक आहुः को वै प्रजापतिस्तत्प्राजापत्यं रूपमथैतत्तूर्ष्णींशंसमुपांशु शंसति वाग्वा एतदहर्मनस्तूर्ष्णींशंसो मनसैव तद्वाचं समर्धयति तदिदास भुवनेषु ज्येष्ठमिति स्तोत्रियस्तृषो वावृधान शवसा भूर्योजा इति वृद्धवन्महद्वन्महद्वद्ध्येतदहः । स एष आत्मा[1] पञ्चविंशस्तत्पदेनोपसृष्टं शंसत्यात्मा वै पञ्चविंशः प्रजा पशव उपसर्गः प्रजयैव तत्पशुभिः प्रेम्येरात्मैनं त्यात्मानमुपसृजते नदं व[1] ओदतीनामिति त्रैष्टुभानि पूर्वाणि पदानि करोति नदस्योत्तराणि प्रथमेन त्रैष्टुभेन पदेन प्रथमं नदस्य पदमुपसंधायावस्यति द्वितीयेन त्रैष्टुभेन द्वितीयं संधाय प्रणौति तृतीयेन त्रैष्टुभेन तृतीयं संधायावस्यति चतुर्थेन त्रैष्टुभेन चतुर्थं संधाय प्रणौत्येवं विदूतां प्रथमा त्रिः शंसति पराचीरुत्तरा एवं विदूता एव या तृतीया सूक्तस्य तस्या उत्तरमर्धर्चमुत्सृजति

---

१ ( ८ । ७ । १ ) २ ( ८ । ७ । १ ) ३ ( ६ । ५ । ५ )

---

१ क. ग शाङ्खायनब्राह्मण गहन नाभिकनिःशतमोऽध्याय ।

नदस्य चोत्तरं सोऽयं मुखस्य विवरस्तेन वाचं वदति मुखेन वै वाचं वदति तौ पुरस्ताद्द्विपदानां शंसति तथा हास्य स्तोत्रियानन्तर्हिता भवत्यात्मानं शस्त्वाऽथ सूददोहसं शंसति तां अस्य सूददोहस इत्यक्षं वै सूददोहा अन्नेन वा इमानि पर्वाणि संहितानि भवन्त्यथो आपो वै सूददोहा अद्भिर्वा इमानि पर्वाणि संहितानि भवन्त्यथो अमृतत्वं वै सूददोहा अमृतत्वमेव तदात्मन् धत्तेऽथ वै सूददोहा ब्राह्मणस्यैतद्रूपं तद्यथा ह वै दारुणः श्लेष्मश्लेषणं स्यात्पारिचर्मण्यं वैवमेव सूददोहाः सर्वेषां वेदानां संश्लेषिणी ॥ १ ॥

अथैतानि शीर्षण्यानि शंसति तानि वै त्रीणि तृचानि भवन्ति त्रीणि वा अस्य शीर्ष्णः कपालानि भवन्ति तान्येवैतैः संदधाति तानि त्रीणि पुनरेकैकं त्रेधा त्रेधा ता नव ऋचो भवन्ति नव वै शिरसि प्राणास्तान्यर्कयन्ति भवन्ति तदेतस्याह्नो रूपम् ॥ २ ॥

[1] अथैनं ग्रैवं शंसति ता वै तिस्र ऋचो भवन्ति त्रीणि वा आसां ग्रीवाणां पर्वाणि भवन्ति तान्येवैताभिः संदधात्युष्णिगुत्तमा सोऽयं स्कन्धो विदलोऽप्यूलः (ह्रः) ॥ ३ ॥

अथैतामक्षां शंसति सा वै त्रिष्टुब्भवति तस्मादयमक्ष- स्थविष्ठ ऋध्यात इन्द्रः स्थविरस्य बाहू बाह्वोरभिरूपाऽथ रथंतरस्य स्तोत्रियानुरूपौ शंसति तयोरुक्तं ब्राह्मणमथ धाय्यां शंसनीयं वै धाय्येयं हि सर्वेषु भूतेषु हिता सा वै दक्षिणे भागे धीयते तस्माद्दक्षिणं भागं पुंसः स्त्रप्यधिश्रेतेऽथ राथंतरं प्रगाथं शंसति तस्योक्तं ब्राह्मणं य एक इद्धव्यश्चर्षणीनामिति सूक्तं तत्पच्छस्तस्य द्वितीयामुद्धृत्य विश्वो ह्यन्यो अरिराजगामेति येतस्य द्वितीया तामिह द्वितीयां करोति तदिमौ पक्षौ व्यतिषजत्यविहाय तस्माद्द्वाभ्यां पक्षाभ्यां सर्वाणि कर्माणि समश्नुते ॥ ४ ॥

अथ तं महस्तर्कं शंसति ता वै तिस्र ऋचो भवन्ति त्रीणि वा अस्य पाणेः पर्वाणि भवन्ति तान्येताभिः संदधात्यति-

---

१ ( ६ । ५ । ५ ) २ ( ४ । ६ । १३ ) ३ ( ७ । ७ । २० )

च्छन्दाः प्रथमा सोऽयमङ्गुष्ठस्तस्मादयमङ्गुष्ठः सर्वा अङ्गुलीः प्रत्येति दक्षिणतः पक्षो राथंतरोऽथ वा उत्तरतः पक्षो बार्हत एतेनैवोक्तब्राह्मणस्तौ वा एतौ पक्षौ बार्हतराथंतरौ चतुर्विंशौ चतुर्विंशतिर्वै संवत्सरस्यार्धमासाः संवत्सरस्यैवाऽऽप्त्यै ॥ ५ ॥

अथैतानि चतुरुत्तराणि शंसति तदनूकं ता एकविंशतिरृचो भवन्त्येकविंशतिर्वा अस्यानूकस्य पर्वाणि भवन्ति तान्येवैताभिः संदधाति तानि वै सप्त तृचानि भवन्ति सप्त वै छन्दांसि सर्वेषामेव च्छन्दसामाप्त्यै तान्यर्कवन्ति भवन्ति तदेतस्याकों रूपम्॥ ६ ॥

अथैता अशीतीः शंसति स्तोत्रियानेवैताभिरनुशंसति गायत्र्या गायत्रमौष्णिह्या च बार्हत्या च बृहद्रथंतरे इयमेव दक्षिणं पार्श्वं गायत्री सव्यमौष्णिही मध्यं बार्हती मध्ये वा इदमात्मनोऽन्नं धीयते त्रिष्टुभावन्तरेण त्रिष्टुब्विदी वैश्वामित्र्यावर्कवत्यावभिरूपे विश्वामित्रो ह्येतदपश्यन्महद्वत्यो वृद्धवत्यः प्रतिपदो भवन्ति महद्वृद्धवन्महद्वन्महद्वद्ध्येतदहः ॥ ७ ॥

महाँ इन्द्रो य ओजसेत्येतया गायत्रीमशीतिं प्रतिपद्यते स्तोमैर्वत्सस्य वावृध इति महद्वत्या वृद्धवत्या महद्वृद्धवन्महद्वन्महद्वद्ध्येतदहः ॥ ८ ॥

यो इन्द्र भुज आभर इत्येतया बार्हतीमशीतिं प्रतिपद्यते स्तोतारमिन्मघवन्नस्य वर्धयेति महद्वत्या वृद्धवत्या महद्वृद्धवन्महद्वन्महद्वद्ध्येतदहरयं ते अस्तु हर्यतः । आ मन्द्रैरिन्द्र हरिभिरिति सूक्ते तत्रदेते अन्ततः शंसति संसिद्धाभिर्बृहतीभिरौष्णिहीमशीतिं समारोहाणीति ॥ ९ ॥

इन्द्रः सुतेषु सोमेष्वित्येतयौष्णिहीमशीतिं प्रतिपद्यते विदे वृधस्य दक्षसो महान्हि ष इति वृद्धवत्या महद्वत्या वृद्धवन्महद्वन्महद्वद्ध्येतदहस्ता वा एता अशीतयः संशस्ताः सप्त विंशतिशता-

१ (५।८।१९) २ (५।८।१९) ३ (६।६।३६) ४ (६।६।३६) ५ (३।३।८) ६ (३।३।१९) ७ (६।१।१७) ८ (६।१।१७)

न्यृचो संपद्यन्ते सप्त वै विंशतिशतानि संवत्सरस्याहोरात्राणां तदशीतिभिः संवत्सरस्याहोरात्राण्याप्नोति सामनिधनंहैके गायत्रीरुष्णिहः संपादयन्ति चतुरक्षराण्यु हैके पुनराददते बार्हत्या अशीत्या अशीतिचतुरक्षराण्युद्धरति काकुभेभ्यः प्रगाथेभ्यश्चतुर्विंशतिं चतुरक्षराणि तानि चतु शतं चतुरक्षराणि चतुःशते गायत्रीपूपदधाति तथा ता गायत्रीरुष्णिहः संपद्यन्ते नाऽऽद्रियेतात्रैव संपन्नमिन्द्राय साम गायतेति तद्यदेतदन्ततः शंसति संसिद्धाभिरुष्णिग्भिर्वशं समारोहाणीति ॥ १० ॥

अथ वशं शंसत्युदरं वै वशस्तेन संसिद्धेनाऽऽनन्तर्यं जिगमिषेयदत. किंच बहिर्द्वारस्तत एव तच्छ्रपयति यदन्तरुदरे तस्माद्बह्वचो देवता बहूनि च्छन्दांसि वशे शस्यन्ते तस्मादिदं बहु विश्वरूपमुदरेऽन्नमवधीयतेऽथैतौ विदूतावर्धर्चावथ सूददोहस सा तत एवोत्सृज्यतेऽत्र चतुर्विंशतिकृत्वः शस्ता भवति ॥ ११ ॥

अथैता द्विपदाः शंसति प्रतिष्ठानीयं वै छन्दो द्विपदाः प्रतिष्ठित्या एव ॥ १२ ॥

अथैतदैन्द्राग्नं सूक्तं गायत्रीशंसं शंसति प्रतिष्ठे वा इन्द्राग्नी प्रतिष्ठित्या एव ॥ १३ ॥

अथैतदावपनं शंसति प्रतिष्ठा वा आवपनं प्रतिष्ठित्या एवाथो एतान्येव पुनरर्वाचीनि भवन्ति ॥ १४ ॥

अथैतमानुष्टुभं सामाम्नायं शंसति वाग्वा एतदहर्वागनुष्टुब्वाच्येव,तद्वाचं प्रतिष्ठापयति दिवं यय दिवं ययेति देवानेवैतेन सूक्तेनैति स प्रत्नथा कविवृध इति तृचमेकवत्तेन समृद्धं गायत्र्युत्तमा तया समृद्धं शास इत्था महाँ असीति महद्वन्महद्वद्ध्येतदहः ॥ १५ ॥

अथैतं त्रिष्टुप्छतं शंसतीन्द्रस्यैवैतच्छन्दो यत्त्रिष्टुप्सदनं स्वेन च्छन्दसा समर्धयति हैरण्यस्तूपीयं च यातऊतीयं च बार्हतराथंतरबृहद्रथंतरे हि पुरस्तात्कृते भवतः सजनीयं चोभ्यर्यचो भरतेन्द्राय सोममिति च ताः सप्तविंशतिर्ऋचो भवन्ति सप्तविंशतिर्वै

१ ( ६ । ७ । १ ) २ ( ६ । १ । ४२ ) ३ ( ८ । ८ । १० ) ४ ( २ । ६ । १३ )

नक्षत्राणि तदक्षरैर्या विराजमाप्नोति विश्वामित्रस्य शंसेद्विश्वा-
मित्रो ह्येतदपश्यद्वामदेव्यस्य शंसेद्वामं ह्येतद्देवानां वसिष्ठस्य
शंसेद्वासिष्ठ ह्येतद्देवानां तत्र पुरस्तादुदुब्रह्मीयस्य पदानुषङ्गा-
ञ्छंसति सर्वे वै कामा एतस्मिन्नन्तरुक्थे तद्यथा अजे पशूनवसृ-
ज्यार्गलेषीके परिव्ययेदेवमेवैतैः पदानुषङ्गैः सर्वान्कामानुभयतः
परिगृह्याऽऽत्मन्धत्तेऽथो उदुब्रह्मीयस्यार्कवत्युत्तमा तदेतस्याह्नो
रूपं त्रिः शस्तया परिदधाति परिधायोक्थवीर्यं जपत्यैकाहिकं पूर्वं
प्रतिष्ठा वा एकाहः प्रतिष्ठित्या एव माहाव्रतिकमुत्तरं महद-
सीति महद्धयेतदहः ॥ १६ ॥

तदेतत्सकृच्छस्तायां सूददोहसि यावच्छस्त्रमुपसर्जन्या सं-
ख्यायमानायामृते तूष्णींशंसं बृहतीसहस्रं संपद्यते तस्या वा एतस्य
बृहतीसहस्रस्य षट्त्रिंशदक्षराणां सहस्राणि भवन्ति तावन्ति शतं
संवत्सरस्याहानि भवन्ति तच्छतसंवत्सरस्याहान्याप्नोत्यनुष्टुप्संपन्न-
मु हैके वाग्वा एतदहर्वागनुष्टुब्वाग्वै सर्वाणि भूतान्यथो वागिदं सर्वमिति
बृहतीसंपन्नमिति त्वेव स्थितं वार्हतो वा एष य एष तपति तदेनं
स्वेन च्छन्दसा समर्धयति त्रिरेवाऽऽह्वयते त्रयो वा इमे लोका इमा-
नेव तल्लोकानाप्नोत्यैकाहिकी याज्या प्रतिष्ठा वा एकाहः प्रतिष्ठित्या
एवाननुवषट्कृत एव भेङ्खं ग्रथ्नन्ति सग्रहमेवायं तं प्राङुपावरो-
हति प्रत्यङ् भेङ्खफलकमपोहति परामृशन्ग्रहं जपति यमिमं प्रजयं
प्राजैषं तमन्वसानीति नेदस्मात्प्रजयादात्मानमपाद्धानीति वैश्वक-
र्मणोऽतिग्राह्यः प्राजापत्यं वा एतदहः प्रजापतिर्विश्वकर्मा तदेनं
स्वेन रूपेण समर्धयति तद्धैतदहरिन्द्रोऽङ्गिरसे प्रोवाचाङ्गिरा
दीर्घतमसे तत उ ह दीर्घतमा दश पुरुषायुषाणि जिजीव
तदप्येतदृषिराह दीर्घतमा मामतेयो जुजुर्वान्दशमे युग इति तदेत-
दायुष्कामस्य शस्त्रमिति ह स्माऽऽह कौषीतकिस्तस्य एवं विद्वानेत-
दहः शंसति सर्वमायुरस्मिँल्लोक एत्याप्नोत्यमृतत्वमक्षितिं स्वर्गे
लोके ॥ १७ ॥

---

१ (२।३।१)

तत्सवितुर्वृणीमह इति वैश्वदेवस्य प्रतिपद्वृणीमह इति महद्वती महद्वन्महद्वद्ध्येतदहरद्या नो देव सवितरित्यनुचरो विश्वा वामा निधीमहीति महद्वन्महद्वद्ध्येतदहस्तद्देवस्य सवितुर्वार्यं महदिति सावित्रं महद्वन्महद्वद्ध्येतदहस्ते हि द्यावापृथिवी विश्वशम्भुवेति द्यावापृथिवीयमुरुव्यचसा महिनी असश्चतेति महद्वन्महद्वद्ध्येतदहः किमु श्रेष्ठः किं यविष्ठो न आजगन्नित्यार्भवं ननन्दिम चमसं यो महाकुल इति महद्वन्महद्वद्ध्येतदहरस्य वामस्य पलितस्य होतुरिति सलिलं वैश्वदेवं सलिलं ह्येतद्देवानामैकाहिके निविदं दधाति प्रतिष्ठा वा एकाहः प्रतिष्ठित्या एवैकाहिकं वैश्वानरीयं प्रतिष्ठा वा एकाहः प्रतिष्ठित्या एव प्रयेज्यवो मरुतो भ्राजदृष्टय इति मारुतं बृहन्महान्त उर्विया विराजथेति बृहद्वन्महद्वन्महद्वद्ध्येतदहर्यक्षिरित्था तवेपुषोऽ*धायि दर्शतमिति जातवेदसीयं तस्यास्ताव्यग्निः शिमीवद्भिरर्केरित्यर्कवत्युत्तमा तदेतस्याह्नो रूपमित्याग्निमारुतसूक्तानीत्येतस्याह्नः सूक्तानि तदग्निष्टोमः संतिष्ठते ब्रह्म वा अग्निष्टोमो ब्रह्मैतदहर्ब्रह्मण्येव तद्ब्रह्म प्रतिष्ठापयन्ति तेऽमृतत्वमाप्नुवन्ति य एतदहरुपयन्ति य एतदहरुपयन्ति ॥ १८ ॥

इति शाङ्खायनारण्यके द्वितीयोऽध्यायः समाप्तः ।

---

१ (४।३।२९) २ (४।४।२५) ३ (४।४।२६) ४ (३।८।४) ५ (२।३।३) ६ (२।३।३) ७ (२।३।४) (८) ९ (४।३।१७) १० (४।३।१७) ११ (२।२।८)

---

* अत्र शाकलसंहितायां वपुषे, इति पाठः।

---

१ ख ग. घ. इति कौषीतकिब्राह्मणे महाव्रतं नाम द्वात्रिंशत्तमोऽध्यायः । महाव्रतं समाप्तम् ।

## अथ तृतीयोऽध्यायः।

ॐ चित्रो ह वै गाङ्ग्यायनिर्यक्ष्यमाण आरुणिं वव्रे। स ह पुत्रं श्वेतकेतुं प्रजिगाय याजयेति। तं हाभ्यागतं पप्रच्छ। गौतमस्य पुत्रोऽस्ति। संवृतं लोके यस्मिन्मा धास्यस्यन्यतमो वाऽध्वा। तस्य मा लोके धास्यसीति। स होवाच। नाहमेतद्वेद। हन्ताऽऽचार्यं पृच्छानीति। स ह पितरमासाद्य पप्रच्छेतीति मा प्राक्षीत्कथं प्रतिब्रवाणीति। स होवाचाहमप्येतन्न वेद। सदस्येव वयं स्वाध्यायमधीत्य हरामहे यन्नः परे सदस्ये ह्युभौ गमिष्याव इति स ह समित्पाणिश्चित्रं गाङ्ग्यायनिं प्रतिचक्रम उपयानीति तं होवाच ब्रह्मार्होऽसि गौतम यो न मानमुपागा एहि व्येव त्वा ज्ञपयिष्यामीति॥ १॥

स होवाच ये वै के चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति तेषां प्राणैः पूर्वपक्ष आप्यायते तानपरपक्षेण प्रजनयत्येतद्वै स्वर्गस्य लोकस्य द्वारं यच्चन्द्रमास्तं यः प्रत्याह तमतिसृजतेऽथ यो न प्रत्याह तमिह वृष्टिर्भूत्वा वर्षति स इह कीटो वा पतङ्गो वा मत्स्यो वा शकुनिर्वा सिंहो वा वराहो वा परश्वा वा शार्दूलो वा पुरुषो वाऽन्यो वा तेषु तेषु स्थानेषु प्रत्याजायते यथाकर्म यथाविद्यं तमागतं पृच्छति कोऽसीति तं प्रतिब्रूयाद्विचक्षणादृतवो रेत आभृतं पञ्चदशात्प्रसूतात्पित्र्यावतस्तं मा पुंसि कर्तर्येरयध्वं पुंसा कर्त्रा मातरि मा निषिञ्च स जायमानो द्वादशत्रयोदशो मासो द्वादशत्रयोदशेन पित्राऽऽसं तद्विदे प्रतितद्विदेऽहं तन्म ऋतवो मृत्यव आभरध्वम्। तेन सत्येन तेन तपस ऋतुरस्म्यार्तवोऽस्मि कोऽसि त्वमसीति तमतिसृजते॥ २॥

स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं[1] स वरुणलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकं तस्य वा एतस्य ब्रह्मलोकस्याऽरो ह्रदो मुहूर्ता येष्टिहा विजरा नदील्यो वृक्षः[2] सालज्यं संस्थानमपराजितमायतनमिन्द्रप्रजापती द्वारगोपौ विभुप्रमितं विचक्षणाऽऽसन्द्यमितौजाः पर्यङ्कः प्रिया च मानसी प्रतिरूपा च चाक्षुषी पुष्पाण्यादायावयतो(न्ति) वै जगान्यम्बाश्चाम्बायवीश्चाप्सरसोऽम्बया नद्यस्तामित्थंविदागच्छति तं

१ ख घ आदित्यलोकमि यविकम्। २ ख० प त्रिमु०।

ब्रह्मा ह्यभिधावत मम यशसा विजरां वा अयं नदीं प्रापन्न वा अयं जरयिष्यतीति ॥ ३ ॥

तं पञ्च शतान्यप्सरसां प्रतियन्ति शतफलहस्ताः शतमाञ्जनहस्ताः शतं माल्यहस्ताः शतं वासोहस्ताः शतं चूर्णहस्तास्तं ब्रह्मालंकारेणालं कुर्वन्ति स ब्रह्मालंकारेणालंकृतो ब्रह्म विद्वान्ब्रह्माभिप्रैति स आगच्छत्यारं ह्रदं तं मनसाऽप्येति तमित्वा संप्रतिविदो मज्जन्ति स आगच्छति मुहूर्तान्यष्टिहांस्तेऽस्मादपद्रवन्ति स आगच्छति विजरां नदीं तां मनसैवाप्येति तत्सुकृतदुष्कृते धुनुवाते तस्य प्रिया ज्ञातयः सुकृतमुपयन्त्यप्रिया दुष्कृतं तद्यथा रथेन धावयन्रथचक्रे पर्यवेक्षेतैवमहोरात्रे पर्यवेक्षेतैवं सुकृतदुष्कृते सर्वाणि च द्वंद्वानि स एष विसुकृतो विदुष्कृतो ब्रह्म विद्वान्ब्रह्माभिप्रैति ॥ ४ ॥

स आगच्छतील्यं वृक्षं तं ब्रह्मगन्धः प्रविशति स आगच्छति सालज्जं संस्थानं तं ब्रह्मरसः प्रविशति स आगच्छत्यपराजितमायतनं तं ब्रह्मयशः प्रविशति स आगच्छतीन्द्रप्रजापती द्वारगोपौ तावस्मादपद्रवतः स आगच्छति विभुप्रमितं तं ब्रह्मतेजः प्रविशति स आगच्छति विचक्षणामासन्दीं बृहद्रथन्तरे सामनी पूर्वौ पादौ श्यैतनौधसे चापरौ वैरूपवैराजे अनूच्ये शाक्वररैवते तिरश्ची सा प्रज्ञा प्रज्ञया हि विपश्यति स आगच्छत्यमितौजसं सं पर्यङ्कं स प्राणस्तस्य भूतं च भविष्यच्च पूर्वौ पादौ श्रीश्चेरा चापरौ भद्रयज्ञायज्ञीये शीर्षण्ये बृहद्रथंतरे अनूच्ये ऋचश्च सामानि च प्राचीनातानानि यजूंषि तिरश्चीनानि सोमांशव उपस्तरणमुद्गीथोऽपरश्रयः श्रीरुपबर्हणं तस्मिन्ब्रह्माऽऽस्ते तमित्थंवित्पादेनैवाग्र आरोहति तं ब्रह्मा पृच्छति कोऽसीति तं प्रतिब्रूयात् ॥ ५ ॥

ऋतुरस्म्यार्तवोऽस्म्याकाशाद्योनेः संभूतो भार्यायै रेतः संवत्सरस्य तेजोभूतस्य भूतस्याऽऽत्मा भूतस्य भूतस्य त्वमात्माऽसि यस्त्वमसि सोऽहमस्मि तमाह कोऽहमस्मीति सत्यमिति ब्रूयात्किं तद्यत्सत्यमिति यदन्यद्देवेभ्यश्च प्राणेभ्यश्च तत्सदथ यदेवाश्च

---

१ ख. आगच्छतील्यं । २ ख. रयः । ३ ख. प्राचीमातानानि ।

प्राणाश्च तस्मं तदेकया वाचाऽभिव्याह्रियते सत्यमित्येतावदिदं सर्वमिदं सर्वमस्मीत्येवैनं तदाह तदेतदृक्श्लोकेनाभ्युक्तम् ॥ ६ ॥

यजूदरः सामशिरा असावृङ्मूर्तिरव्ययः । स ब्रह्मेति विज्ञेय ऋषिर्ब्रह्ममयो महानिति ॥ तमाह केन मे पौंस्नानि नामान्याप्नोषीति प्राणेनेति ब्रूयात्केन नपुंसकानीति मनसेति केन स्त्रीनामानीति वाचेति केन गन्धानिति घ्राणेनेति केन रूपाणीति चक्षुषेति केन शब्दानिति श्रोत्रेणेति केनान्नरसानिति जिह्वयेति केन कर्माणीति हस्ताभ्यामिति केन सुखदुःखे इति शरीरेणेति केनाऽऽनन्दं रतिं प्रजातिमित्युपस्थेनेति केनेत्या इति पादाभ्यामिति केन धियो विज्ञातव्यं कामानिति प्रज्ञयैवेति ब्रूयात्तमाह यो वै खलु मे लोकोऽयं तेऽसाविति सा या ब्रह्मणो जितिर्या व्यष्टिस्तां जितिं जयति तां व्यष्टिं व्यश्नुते य एवं वेद य एवं वेद ॥ ७ ॥

इति शाङ्खायनारण्यके तृतीयोऽध्यायः समाप्तः ।

---

अथ चतुर्थोऽध्यायः ।[1]

ॐ प्राणो ब्रह्मेति ह स्माऽऽह कौषीतकिस्तस्यैतस्य प्राणस्य ब्रह्मणो मनो दूतं चक्षुर्गोप्तृ श्रोत्रं संश्रावयितृ वाक्परिवेष्ट्री स यो ह वा एतस्य प्राणस्य ब्रह्मणो मनो दूतं वेद दूतवान्भवति यश्चक्षुर्गोप्तृ गोप्तृमान्भवति यः श्रोत्रं संश्रावयितृ संश्रावयितृमान्भवति यो वाचं परिवेष्ट्रीं परिवेष्टृमान्भवति तस्मै वा एतस्मै प्राणाय ब्रह्मण एता देवता अयाचमानाय बलिं हरन्त्येवं हैवास्मै सर्वाणि भूतान्ययाचमानायैव बलिं हरन्ति य एवं वेद तस्योपनिषन्न याचेदिति तद्यथा ग्रामं भिक्षित्वाऽलब्ध्वोपविशेन्नाहमतो दत्तमश्नीयामिति त एवैनमुपमन्त्रयन्ते ये पुरस्तात्प्रत्याचक्षीरन्नेष धर्मो याचितो भवत्यन्नदास्त्वेवैनमुपमन्त्रयन्ते ददाम त इति ॥ १ ॥

प्राणो ब्रह्मेति ह स्माऽऽह पैङ्ग्यस्तस्य वा एतस्य प्राणस्य ब्रह्मणो वाक्परस्ताच्चक्षुरारुन्धते चक्षुः परस्ताच्छ्रोत्रमारुन्धते श्रोत्रं परस्तान्मन आरुन्धते मनः परस्तात्प्राण आरुन्धते तस्मै

---

१ प. प्रथमोऽध्यायः ।

वा एतस्मै प्राणाय ब्रह्मण एता देवता अयाचमानाय बलिं हरन्त्येवं हैवास्मै सर्वाणि भूतान्ययाचमानायैव बलिं हरन्ति य एवं वेद तस्योपनिषन्न याचेदिति तद्यथा ग्रामं भिक्षित्वाऽलब्ध्वो-पविशेन्नाहमतोऽदत्तमश्नीयामिति त एवैनमुपमन्त्रयन्ते ये पुरस्ता-त्प्रत्याचक्षीरन्नेष धर्मो याचितो भवत्यन्नदास्त्वेवैनमुपमन्त्रयन्ते ददाम त इति ॥ २ ॥

अथात एकधनावरोधनं य एकधनमभिध्यायात्पौर्णमास्यां वाऽमावास्यायां वा शुद्धपक्षे वा पुण्ये नक्षत्र एतेषामेकस्मिन्पर्व-ण्यग्निमुपसमाधाय परिसमुह्य परिस्तीर्य पर्युक्ष्य दक्षिणं जान्वाच्य स्रुवेणाऽऽज्याहुतीर्जुहोति । वाङ् नाम देवतावरोधिनी सा मेऽमुष्मा-दिदमवरुन्ध्यात्तस्यै स्वाहा प्राणो नाम देवतावरोधिनी सा मेऽमु-ष्मादिदमवरुन्ध्यात्तस्यै स्वाहा चक्षुर्नाम देवतावरोधिनी सा मेऽमुष्मादिदमवरुन्ध्यात्तस्यै स्वाहा श्रोत्रं नाम देवतावरोधिनी सा मेऽमुष्मादिदमवरुन्ध्यात्तस्यै स्वाहा प्रज्ञा नाम देवतावरोधिनी सा मेऽमुष्मादिदमवरुन्ध्यात्तस्यै स्वाहेत्यथ धूमगन्धं प्रजिघायाऽऽ-ज्यलेपेनाङ्गान्यनुविमृज्य वाचंयमोऽभिप्रव्रज्यार्थं ब्रूयाद्दूतं वा प्रहिणुयाल्लभते हैव ॥ ३ ॥

अथातो दैवस्मरो यस्य प्रियो बुभूषेद्यस्यै वा येषां वा यासां वैतेषामेवैकस्मिन्पर्वण्येतयैवाऽऽवृतैता आज्याहुतीर्जुहोति वाचं ते मयि जुहोम्यसौ स्वाहा । प्राणं ते मयि जुहोम्यसौ स्वाहा । चक्षुस्ते मयि जुहोम्यसौ स्वाहा । श्रोत्रं ते मयि जुहो-म्यसौ स्वाहा । मनस्ते मयि जुहोम्यसौ स्वाहा । प्रज्ञां ते मयि जुहोम्यसौ स्वाहेत्यथ धूमगन्धं प्रजिघायाऽऽज्यलेपेनाङ्गान्यनु-विमृज्य वाचंयमोऽभिप्रव्रज्य संस्पर्शं जिगमिषेदपि वाताद्वा तिष्ठे-त्संभाषमाणः प्रियो हैव भवति स्मरन्ति हैवास्य ॥ ४ ॥

अथातः संयमनं प्रातर्दनमान्तरमग्निहोत्रमित्याचक्षते यावद्वै पुरुषो भाषते न तावत्प्राणितुं शक्नोति प्राणं तदा वाचि जुहोति यावद्वै पुरुषः प्राणिति न तावद्भाषितुं शक्नोति वाचं तदा प्राणे

जुहोत्येते अनन्ते अमृते आहुती जाग्रच्च स्वपंश्च संततं जुहोत्यथ या अन्या आहुतयोऽन्तवत्यस्ताः कर्ममय्यो हि भवन्ति तद्ध स्मैतत्पूर्वे विद्वांसोऽग्निहोत्रं न जुहवांचक्रुः ॥ ५ ॥

उक्थं ब्रह्मेति ह स्माऽऽह शुष्कभृङ्गारस्तदृगित्युपासीत सर्वाणि हास्मै भूतानि श्रैष्ठ्यायाभ्यर्च्यन्ते तद्यजुरित्युपासीत सर्वाणि हास्मै भूतानि श्रैष्ठ्याय युज्यन्ते तत्सामेत्युपासीत सर्वाणि हास्मै भूतानि श्रैष्ठ्याय संनमन्ते तच्छ्रीरित्युपासीत तत्तेज इत्युपासीत तद्यथैतच्छ्रीमत्तमं यशस्वितमं तेजस्वितममिति शस्त्रेषु भवत्येवं हैव स सर्वेषु भूतेषु श्रीमत्तमो यशस्वितमस्तेजस्वितमो भवति य एवं वेद । तदेतदैष्टिकं कर्म यमात्मानमध्वर्युः संस्करोति तस्मिन्यजुर्मयं प्रवयति यजुर्मय ऋङ्मयं होता ऋङ्मये साममयमुद्गाता [साममये] स एष त्रय्यै विद्याया आत्मैष उ एवैतदिन्द्रस्याऽऽत्मा भवति य एवं वेद ॥ ६ ॥

अथातः सर्वजितः कौषीतकेस्त्रीण्युपासनानि भवन्ति सर्वजिद्ध स्म कौषीतकिरुद्यन्तमादित्यमुपतिष्ठते यज्ञोपवीतं धृत्वोदकमानीय त्रिः प्रसिच्योदकपात्रं वर्गोऽसि पाप्मानं मे वृङ्धीत्येतयैवाऽऽवृता मध्ये सन्तमुद्वर्गोऽसि पाप्मानं म उद्वृङ्धीत्येतयैवाऽऽवृताऽस्तं यन्तं संवर्गोऽसि पाप्मानं मे संवृङ्धीति तद्यदहोरात्राभ्यां पापं करोति सं तद्वृङ्क्ते तथो एवैवं विद्वानेतयैवाऽऽवृताऽऽदित्यमुपतिष्ठते यदहोरात्राभ्यां पापं करोति सं तद्वृङ्क्ते ॥ ७ ॥

अथ मासि मास्यमावास्यायां वृत्तायां पश्चाच्चन्द्रमसं दृश्यमानमुपतिष्ठेतैतयैवाऽऽवृता हरिततृणे वा प्रत्यस्य यन्मे सुसमिद्धृदयं दिवि चन्द्रमसि श्रितं मन्येऽहं मां तद्विद्वांसं माऽहं पुत्र्यमघं रुदमिति न हास्मात्पूर्वाः प्रजाः प्रैतीति जातपुत्रस्याथाजातपुत्रस्याऽऽप्यायस्व समेतु ते सं ते पयांसि समु यन्तु वाजा यमादित्या अंशुमाप्याययन्तीत्येतास्तिस्र ऋचो जपित्वा माऽस्माकं प्राणेन प्रजया पशुभिराप्यायिष्ठा योऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तस्य प्राणेन प्रजया पशुभिराप्यायस्वेत्यैन्द्रीमावृतमावर्त आदित्यस्याऽऽवृतमन्वावर्त इति दक्षिणं बाहुमन्वावर्तते ॥ ८ ॥

---

१ ( १।६।२२ ॥ ६।८।२२ ) २ ( १।६।२२ )

अथ पौर्णमास्यां पुरस्ताच्चन्द्रमसं दृश्यमानमुपतिष्ठेतैतयैवाऽऽवृता सोमो राजाऽसि विचक्षणः पञ्चमुखोऽसि प्रजापतिर्ब्राह्मणस्त एकं मुखं तेन मुखेन राज्ञोऽत्सि तेन मुखेन मामन्नादं कुरु राजा त एकं मुखं तेन मुखेन विशोऽत्सि तेन मुखेन मामन्नादं कुरु श्येनस्त एकं मुखं तेन मुखेन पक्षिणोऽत्सि तेन मुखेन मामन्नादं कुर्वग्निष्ट एकं मुखं तेन मुखेनेमं लोकमत्सि तेन मुखेन मामन्नादं कुरु त्वै...पञ्चमुखं तेन मुखेन सर्वाणि भूतान्यत्सि तेन मुखेन मामन्नादं कुरु माऽस्माकं प्राणेन प्रजया पशुभिरपक्षेष्ठा योऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तस्य प्राणेन प्रजया पशुभिरपक्षीयस्वेति दैवीमावृतमावर्त आदित्यस्याऽऽवृतमन्वावर्त इति दक्षिणं बाहुमन्वावर्तते ॥ ९ ॥

अथ संवेश्य जायायै हृदयमभिमृशेद्यत्ते सुसीमे हृदयं श्रितमन्तः प्रजापतौ तेनामृतत्वस्येशाने मा त्वं पुत्र्यमघं निगा इति न हास्याः पूर्वाः प्रजाः प्रैतीति ॥ १० ॥

अथ प्रोष्याऽऽयन्पुत्रस्य मूर्धानमभिजिघ्रेत् । अङ्गादङ्गात्संभवसि हृदयादधिजायसे । आत्मा वै पुत्रनामाऽसि स जीव शरदः शतमिति नामास्य दधात्यश्मा भव परशुर्भव हिरण्यमस्तृतं भव । वेदो वै पुत्रनामाऽसि स जीव शरदः शतमिति नामास्य गृह्णात्यथैनत्परिगृह्णाति येन प्रजापतिः प्रजाः पर्यगृह्णात्तदरिष्ट्यै तेन त्वा परिगृह्णाम्यसावित्यथास्य दक्षिणे कर्णे जपत्यस्मे प्रयन्धि मघवन्नृजीषिन्निन्द्र श्रेष्ठानि द्रविणानि धेहीति सव्ये मा भेथा मा व्यथिष्ठाः शतं शरद आयुषो जीवस्व पुत्र ते नाम्ना मूर्धानमभिजिघ्रामीति त्रिरस्य मूर्धानमभिजिघ्रेद्गवां त्वा हिंकारेणाभिहिंकरामीति त्रिरस्य मूर्धानमभिहिं कुर्यात् ॥ ११ ॥

अयातो दैवः परिमर एतद्वै ब्रह्म दीप्यते यदग्निर्ज्वलत्यथैतन्म्रियते यन्न ज्वलति तस्याऽऽदित्यमेव तेजो गच्छति वायुं प्राण एतद्वै ब्रह्म दीप्यते यदादित्यो दृश्यतेऽथैतन्म्रियते यन्न दृश्यते तस्य चन्द्रमसमेव तेजो गच्छति वायुं प्राण एतद्वै ब्रह्म दीप्यते

१ ( ३ । २ । २० ) २ ( २ । ६ । २७ )

यच्चन्द्रमा दृश्यतेऽथैतन्म्रियते यन्न दृश्यते तस्य विद्युतमेव तेजो गच्छति वायुं प्राण एतद्वै ब्रह्म दीप्यते यद्विद्युद्विद्योततेऽथैतन्म्रियते यन्न विद्योतते तस्या दिश एव तेजो गच्छति वायुं प्राणस्ता वा एताः सर्वा देवता वायुमेव प्रविश्य वायौ मृत्वाऽऽमूर्च्छन्ते तस्मादेव पुनरुदीरत इत्यधिदैवतमथाध्यात्मम् ॥ १२ ॥

एतद्वै ब्रह्म दीप्यते यद्वाचा वदत्यथैतन्म्रियते यन्न वदति तस्य चक्षुरेव तेजो गच्छति प्राणं प्राण एतद्वै ब्रह्म दीप्यते यच्चक्षुषा पश्यत्यथैतन्म्रियते यन्न पश्यति तस्य श्रोत्रमेव तेजो गच्छति प्राणं प्राण एतद्वै ब्रह्म दीप्यते यच्छ्रोत्रेण शृणोत्यथैतन्म्रियते यन्न शृणोति तस्य मन एव तेजो गच्छति प्राणं प्राण एतद्वै ब्रह्म दीप्यते यन्मनसा ध्यायत्यथैतन्म्रियते यन्न ध्यायति तस्य प्राणमेव तेजो गच्छति प्राणं प्राणस्ता वा एताः सर्वा देवताः प्राणमेव प्रविश्य प्राणे मृत्वाऽऽमूर्च्छन्ते तस्मादेव पुनरुदीरते तद्यदिह वा एवं विद्वांसमुभौ पर्वतावभिप्रवर्तेयातां दक्षिणश्चोत्तरश्च तुस्तूर्षमाणौ न हैनं स्तृण्वीयातामथ य एनं द्विषन्ति याँश्च स्वयं द्वेष्टि त एवैनं परिम्रियन्ते ॥ १३ ॥

अथातो निःश्रेयसादानमेता ह वै देवता अहंश्रेयसे विवदमाना अस्माच्छरीरादुच्चक्रमुस्तद्दारु पपात शुष्कं दारुभूतं शिश्येऽथैनद्वाक्प्रविवेश तद्वाचा वदच्छिश्य एवाथैनच्चक्षुः प्रविवेश तद्वाचाऽवदच्चक्षुषाऽपश्यच्छिश्य एवाथैनच्छ्रोत्रं प्रविवेश तद्वाचावदच्चक्षुषाऽपश्यच्छ्रोत्रेण शृण्वच्छिश्य एवाथैतन्मनः प्रविवेश तद्वाचावदच्चक्षुषाऽपश्यच्छ्रोत्रेण शृण्वन्मनसाऽध्यायच्छिश्य एवाथैनत्प्राणः प्रविवेश तत्तत एव समुत्तस्थौ ता वा एताः सर्वा देवताः प्राणे निःश्रेयसं विदित्वा प्राणमेव प्रज्ञात्मानमभिसंभूय सहैवैतैः सर्वैरस्माच्छरीरादुच्चक्रमुस्ते वायुप्रतिष्ठा आकाशात्मानः स्वरीयुस्तथो एवैवं विद्वान्प्राणे निःश्रेयसं विदित्वा प्राणमेव प्रज्ञात्मानमभिसंभूय सहैवैतैः सर्वैरस्माच्छरीरादुत्क्रामति स वायुप्रतिष्ठ आकाशात्मा स्वरेति स तद्गच्छति यत्रैते देवास्तत्प्राप्य यदमृता देवास्तदमृतो भवति य एवं वेद ॥ १४ ॥

अथातः पितापुत्रीयं संप्रदानमिति चाऽऽचक्षते पिता पुत्रं प्रेष्यन्नाह्वयति नवैस्तृणैरगारं संस्तीर्याग्निमुपसमाधायोदकुम्भं सपा

प्रमुपनिधायाहतेन वाससा संप्रच्छन्नः पिता शेत एत्य पुत्र उप-
रिष्टादभिनिपद्यत इन्द्रियैरिन्द्रियाणि संस्पृश्यापि वाऽस्मा आसी-
नायाभिमुखायैव संप्रदध्यादथास्मै संप्रयच्छति वाचं मे त्वयि
दधानीति पिता वाचं ते मयि दध इति पुत्रः प्राणं मे त्वयि
दधानीति पिता प्राणं मयि दध इति पुत्रश्चक्षुर्मे त्वयि दधा-
नीति पिता चक्षुस्ते मयि दध इति पुत्रः श्रोत्रं मे त्वयि
दधानीति पिता श्रोत्रं ते मयि दध इति पुत्रोऽन्नरसान्मे त्वयि
दधानीति पिताऽन्नरसांस्ते मयि दध इति पुत्रः कर्माणि
मे त्वयि दधानीति पिता कर्माणि ते मयि दध इति
पुत्रः सुखदुःखे मे त्वयि दधानीति पिता सुखदुःखे ते मयि दध
इति पुत्र आनन्दं रतिं प्रजातिं मे त्वयि दधानीति पिताऽऽनन्दं
रतिं प्रजातिं ते मयि दध इति पुत्र इत्यां मे त्वयि दधानीति
पितेत्यां ते मयि दध इति पुत्रो मनो मे त्वयि दधानीति पिता
मनस्ते मयि दध इति पुत्रः प्रज्ञां मे त्वयि दधानीति पिता प्रज्ञां
ते मयि दध इति पुत्रो यद्यु वा उपाभिगदः स्यात्समासेनैव ब्रूया-
त्प्राणान्मे त्वयि दधानीति पिता प्राणांस्ते मयि दध इति पुत्रोऽथ
दक्षिणावृदुपनिष्क्रामति तं पिताऽनुमन्त्रयते यशो ब्रह्मवर्चसं
कीर्तिस्त्वा जुषतामित्यथेतरः सव्यमंसमन्ववेक्षते पाणिनाऽ-
न्तर्धाय वसनान्तेन वा प्रच्छाद्य स्वर्गाँल्लोकान्कामानाप्नुहीति स
यद्यगदः स्यात्पुत्रस्यैश्वर्ये पिता वसेत्परि वा व्रजेद्यदु वै प्रेयात्स-
थैवैनं समापयेयुर्यथा समापयितव्यो भवति यथा समापयितव्यो
भवति ॥ १५ ॥

इति शाङ्खायनारण्यके चतुर्थोऽध्यायः ॥ ४ ॥

---

अथ पञ्चमोऽध्यायः ।

ॐ प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम युद्धेन
च पौरुषेण च तं हेन्द्र उवाच प्रतर्दन वरं वृणीष्वेति स होवाच
प्रतर्दनस्त्वमेव वृणीष्व यं त्वं मनुष्याय हिततमं मन्यस इति तं
हेन्द्र उवाच न वै वरोऽवरस्मै वृणीते त्वमेव वृणीष्वेत्यवरो वै
किल मेति होवाच प्रतर्दनोऽथो खल्विन्द्रः सत्यादेव नेयाय सत्यं
हीन्द्रस्तं हेन्द्र उवाच मामेव विजानीह्येतदेवाहं मनुष्याय हिततमं

---

१ ह. प 'त्रकृत गा° । २ प. 'के द्वितीयोऽध्याय. ।

मन्ये यो मां विजानीयात्त्रिशीर्षाणं त्वाष्ट्रमहनमरुर्मुखान्यतीन्सालावृकेभ्यः प्रायच्छन्बह्वीः संधा अतिक्रम्य दिवि प्रह्लादीयानृणमहमन्तरिक्षे पौलोमान्पृथिव्यां कालखञ्जांस्तस्य मे तत्र न लोम चनामीयत स यो मां वेद न ह वै तस्य केन च कर्मणा लोको मीयते न स्तेयेन न भ्रूणहत्यया न मातृवधेन न पितृवधेन नास्य पापं चन चकृषो मुखान्नीलं वेत्तीति ॥ १ ॥

स होवाच प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्स्वाऽऽयुः प्राणः प्राणो वा आयुर्यावद्ध्यस्मिञ्छरीरे प्राणो वसति तावदायुः प्राणेन ह्येवास्मिँल्लोकेऽमृतत्वमाप्नोति प्रज्ञया सत्यं संकल्पं स यो मामायुरमृतमित्युपास्ते सर्वमायुरस्मिँल्लोक एत्याऽऽप्नोत्यमृतत्वमक्षितिं स्वर्गे लोके तद्धैक आहुरेकभूयं वै प्राणा गच्छन्तीति नहि कश्चन शक्नुयात्सकृद्वाचा नाम प्रज्ञापयितुं चक्षुषा रूपं श्रोत्रेण शब्दं मनसा ध्यातमेकभूयं वै प्राणा भूत्वैकैकमेतानि सर्वाणि प्रज्ञापयन्तीति वाचं वदन्तीं सर्वे प्राणा अनुवदन्ति चक्षुः पश्यत्सर्वे प्राणा अनुपश्यन्ति श्रोत्रं शृण्वत्सर्वे प्राणा अनुशृण्वन्ति मनो ध्यायत्सर्वे प्राणा अनुध्यायन्ति प्राणं प्राणन्तं सर्वे प्राणा अनुप्राणन्त्येवमु हैतदिति हेन्द्र उवाचास्ति त्वेव प्राणानां निःश्रेयसादानमिति ॥ २ ॥

जीवति वागपेतो मूकान्हि पश्यामो जीवति चक्षुरपेतोऽन्धान्हि पश्यामो जीवति श्रोत्रापेतो बधिरान्हि पश्यामो जीवति मनोपेतो बालान्हि पश्यामो जीवति बाहुच्छिन्नो जीवत्यूरुच्छिन्न इत्येवं हि पश्याम इत्यथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति तस्मादेतदेवोक्थमुपासीतेति सैषा प्राणे सर्वाप्तिर्यो वै प्राणः सा प्रज्ञा या वा प्रज्ञा स प्राणस्तस्यैषैव दृष्टिरेतद्विज्ञानं यत्रैतत्पुरुषः सुप्तः स्वप्नं न कंचन पश्यत्यथास्मिन्प्राण एवैकधा भवति तदेनं वाक् सर्वैर्नामभिः सहाप्येति चक्षुः सर्वै रूपैः सहाप्येति श्रोत्रं सर्वैः शब्दैः सहाप्येति मनः सर्वैर्ध्यानैः सहाप्येति स यदा प्रतिबुध्यते यथाऽग्नेर्ज्वलतः सर्वा दिशो विस्फुलिङ्गा विप्रतिष्ठेरन्नेवमेवैतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो

१ ख. घ. वातृ० ।

देवा देवेभ्यो लोकाः स एष प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति तस्मादेतदेवोक्थमुपासीतेति सैषा प्राणे सर्वाप्तिर्यो वै प्राणः सा प्रज्ञा या वा प्रज्ञा स प्राणस्तस्यैषैव सिद्धिरेतद्विज्ञानं यत्रैतत्पुरुष आर्तो मरिष्यन्नाबल्यमेत्य संमोहमेति तमाहुरुदक्रमी च्चित्तं न शृणोति न पश्यति न वाचा वदति न ध्यायत्यथास्मिन्प्राण एवैकधा भवति तदेनं वाक् सर्वैर्नामभिः सहाप्येति चक्षुः सर्वै रूपैः सहाप्येति श्रोत्रं सर्वैः शब्दैः सहाप्येति मनः सर्वैर्ध्यानैः सहाप्येति स यदाऽस्माच्छरीरादुत्क्रामति सहैवैतैः सर्वैरुत्क्रामति ॥ ३ ॥

वागेवास्मिन्सर्वाणि नामान्यभिविसृज्यन्ते वाचा सर्वाणि नामान्याप्नोति प्राण एवास्मिन्सर्वे गन्धा अभिविसृज्यन्ते प्राणेन सर्वान्गन्धानाप्नोति चक्षुरेवास्मिन्सर्वाणि रूपाण्यभिविसृज्यन्ते चक्षुषा सर्वाणि रूपाण्याप्नोति श्रोत्रमेवास्मिन्सर्वे शब्दा अभिविसृज्यन्ते श्रोत्रेण सर्वाञ्छब्दानाप्नोति मन एवास्मिन्सर्वाणि ध्यातान्यभिविसृज्यन्ते मनसा सर्वाणि ध्यातान्याप्नोति सह ह्येतावस्मिञ्छरीरे वसतः सहोत्क्रामतोऽथ यथाऽस्यै प्रज्ञायै सर्वाणि भूतान्येकं भवन्तीति तद्व्याख्यास्यामः ॥ ४ ॥

वागेवास्या एकमङ्गमुदूढं तस्यै नाम परस्तात्प्रतिविहिता भूतमात्रा घ्राण एवास्या एकमङ्गमुदूढं तस्य गन्धः परस्तात्प्रतिविहिता भूतमात्रा चक्षुरेवास्या एकमङ्गमुदूढं तस्य रूपं परस्तात्प्रतिविहिता भूतमात्रा श्रोत्रमेवास्या एकमङ्गमुदूढं तस्य शब्दः परस्तात्प्रतिविहिता भूतमात्रा जिह्वैवास्या एकमङ्गमुदूढं तस्या अन्नरसः परस्तात्प्रतिविहिता भूतमात्रा हस्तावेवास्या एकमङ्गमुदूढं तयोः कर्म परस्तात्प्रतिविहिता भूतमात्रा शरीरमेवास्या एकमङ्गमुदूढं तस्य सुखदुःखे परस्तात्प्रतिविहिता भूतमात्रोपस्थ एवास्या एकमङ्गमुदूढं तस्याऽऽनन्दो रतिः प्रजातिः परस्तात्प्रतिविहिता भूतमात्रा पादा एवास्या एकमङ्गमुदूढं तयोरित्या परस्तात्प्रतिविहिता भूतमात्रा मन एवास्या एकमङ्गमुदूढं तस्य धीः कामाः परस्तात्प्रतिविहिता भूतमात्रा ॥ ५ ॥

प्रज्ञया वाचं समारुह्य वाचा सर्वाणि नामान्याप्नोति प्रज्ञया

प्राणं समारुह्य प्राणेन सर्वान्गन्धानाप्नोति प्रज्ञया चक्षुः समारुह्य चक्षुषा सर्वाणि रूपाण्याप्नोति प्रज्ञया श्रोत्रं समारुह्य श्रोत्रेण सर्वाञ्छब्दानाप्नोति प्रज्ञया जिह्वा समारुह्य जिह्वया सर्वानन्न-रसानाप्नोति प्रज्ञया हस्तौ समारुह्य हस्ताभ्यां सर्वाणि कर्माण्याप्नोति प्रज्ञया शरीरं समारुह्य शरीरेण सुखदुःखे आप्नोति प्रज्ञयोपस्थं समारुह्योपस्थेनाऽऽनन्दं रतिं प्रजातिमाप्नोति प्रज्ञया पादौ समारुह्य पादाभ्यां सर्वा इत्या आप्नोति प्रज्ञया मनः समारुह्य मनसा सर्वाणि ध्यातान्याप्नोति ॥ ६ ॥

न हि प्रज्ञापेता वाङ्नाम किंचन प्रज्ञपयेदन्यत्र मे मनोऽभू-दित्याह नाहमेतन्नाम प्राज्ञासिषमिति न हि प्रज्ञापेतः प्राणो गन्धं कंचन प्रज्ञपयेदन्यत्र मे मनोऽभूदित्याह नाहमेतं गन्धं प्राज्ञासिष-मिति नहि प्रज्ञापेतं चक्षू रूपं किंचन प्रज्ञपयेदन्यत्र मे मनोऽभू-दित्याह नाहमेतद्रूपं प्राज्ञासिषमिति नहि प्रज्ञापेतं श्रोत्रं शब्दं कंचन प्रज्ञपयेदन्यत्र मे मनोऽभूदित्याह नाहमेतं शब्दं प्राज्ञासिषमिति नहि प्रज्ञापेता जिह्वाऽन्नरसं कंचन प्रज्ञपयेदन्यत्र मे मनोऽभूदि-त्याह नाहमेतमन्नरसं प्राज्ञासिषमिति न हि प्रज्ञापेतौ हस्तौ कर्म किंचन प्रज्ञपयेतामन्यत्र नौ मनोऽभूदित्याहतुर्नाऽऽवामेतत्कर्म प्राज्ञासिष्वेति नहि प्रज्ञापेतं शरीरं न सुखं न दुःखं किंचन प्रज्ञप-येदन्यत्र मे मनोऽभूदित्याह नाहमेतं न सुखं न दुःखं प्राज्ञासिष-मिति नहि प्रज्ञापेत उपस्थ आनन्दं न रतिं न प्रजातिं काचन प्रज्ञपयेदन्यत्र मे मनोऽभूदित्याह नाहमेतमानन्दं न रतिं न प्रजातिं प्राज्ञासिषमिति नहि प्रज्ञापेतौ पादावित्यां कांचन प्रज्ञपयेता-मन्यत्र नौ मनोऽभूदित्याहतुर्नाऽऽवामेतामित्यां प्राज्ञासिष्वेति नहि प्रज्ञापेता धीः काचन सिध्येन्न प्रज्ञातव्यं प्रज्ञायेत ॥ ७ ॥

न वाचं विजिज्ञासीत वक्तारं विद्यान्न गन्धं विजिज्ञासीत घ्रातारं विद्यान्न रूपं विजिज्ञासीत द्रष्टारं विद्यान्न शब्दं विजिज्ञा-सीत श्रोतारं विद्यान्नान्नरसं विजिज्ञासीतान्नरसस्य विज्ञातारं विद्यान्न कर्म विजिज्ञासीत कर्तारं विद्यान्न सुखदुःखे विजिज्ञा-सीत सुखदुःखयोर्विज्ञातारं विद्यान्नाऽऽनन्दं न रतिं न प्रजातिं

विजिज्ञासीताऽऽनन्दस्य रतेः प्रजातेर्विज्ञातारं विद्याद्वेत्यां विजिज्ञासीतैतारं विद्यान्न मनो विजिज्ञासीत मन्तारं विद्यात्ता वा एता दशैव भूतमात्रा अधिप्रज्ञं दश प्रज्ञामात्रा अधिभूतं यद्धि भूतमात्रा न स्युर्न प्रज्ञामात्राः स्युर्यद्वा प्रज्ञामात्रा न स्युर्न भूतमात्राः स्युर्न ह्यन्यतरतो रूपं किंचन सिध्येन्नो एतन्नाना तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिताः स एष प्राण एव प्रज्ञात्माऽऽनन्दोऽजरोऽमृतो न साधुना कर्मणा भूयान्भवति नो एवासाधुना कनीयानेष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषत एष उ एवासाधु कर्म कारयति तं यमधो निनीषत एष लोकपाल एष लोकाधिपतिरेष लोकेशः स म आत्मेति विद्यात्स म आत्मेति विद्यात् ॥ ८ ॥

इति शाङ्खायनारण्यके पञ्चमोऽध्यायः ॥ ५ ॥

अथ षष्ठोऽध्यायः ।

ॐ अथ ह वै गार्ग्यो बालाकिरनूचानः संस्पृष्ट आस सोऽवसदुशीनरेषु स वसन्मत्स्येषु कुरुपञ्चालेषु काशिविदेहेष्विति स हाजातशत्रुं काश्यमाव्रज्योवाच ब्रह्म ते ब्रवाणीति तं होवाचाजातशत्रुः सहस्रं दद्मि त इत्येतस्यां वाचि जनको जनक इति वा उ जना धावन्तीति ॥ १ ॥

आदित्ये बृहच्चन्द्रमस्यन्नं विद्युति सत्यं स्तनयित्नौ शब्दो वायाविन्द्रो वैकुण्ठ आकाशे पूर्णमग्नौ विषासहिरित्यप्सु तेज इत्यधिदैवतमथाध्यात्ममादर्शे प्रतिरूपश्छायायां द्वितीयः प्रतिश्रुत्कायामसुरिति शब्दे मृत्युः स्वप्ने यमः शरीरे प्रजापतिर्दक्षिणेऽक्षिणि वाच॰ सव्येऽक्षिणि सत्यस्य ॥ २ ॥

स होवाच बालाकिर्य एवैष आदित्ये पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मा मैतस्मिन्संवादयिष्ठा बृहत्पाण्डरवासा अतिष्ठाः सर्वेषां भूतानां मूर्धेति वा अहमेतमुपास इति स यो हैतमेवमुपास्तेऽतिष्ठाः सर्वेषां भूतानां मूर्धा भवति ॥ ३ ॥

स होवाच बालाकिर्य एवैष चन्द्रमसि पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मा मैतस्मिन्संवादयिष्ठा अन्नस्याऽऽत्मेति वा अहमेतमुपास इति स यो हैतमेवमुपास्तेऽन्नस्याऽऽत्मा भवति ॥ ४ ॥

स होवाच बालाकिर्य एवैष विद्युति पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मा मैतस्मिन्संवादयिष्ठाः सत्यस्याऽऽत्मेति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते सत्यस्याऽऽत्मा भवति ॥ ५ ॥

स होवाच बालाकिर्य एवैष स्तनयित्नौ पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मा मैतस्मिन्संवादयिष्ठाः शब्दस्याऽऽत्मेति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते शब्दस्याऽऽत्मा भवति ॥ ६ ॥

स होवाच बालाकिर्य एष वायौ पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मा मैतस्मिन्संवादयिष्ठा इन्द्रो वैकुण्ठोऽपराजिता सेनेति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते जिष्णुर्ह वा अपराजिष्णुरन्यतस्त्यजायी भवति ॥ ७ ॥

स होवाच बालाकिर्य एवैष आकाशे पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मा मैतस्मिन्संवादयिष्ठाः पूर्णमप्रवर्ति ब्रह्मेति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते पूर्यते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति ॥ ८ ॥

स होवाच बालाकिर्य एवैषोऽग्नौ पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मा मैतस्मिन्संवादयिष्ठा विषासहिरिति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते विषासहिर्ह वा अन्येषु भवति ॥ ९ ॥

स होवाच बालाकिर्य एवैषोऽप्सु पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मा मैतस्मिन्संवादयिष्ठास्तेजस आत्मेति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते तेजस आत्मा भवतीत्यधिदैवतमथाध्यात्मम् ॥ १० ॥

स होवाच बालाकिर्य एवैष आदर्शे पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मा मैतस्मिन्संवादयिष्ठाः प्रतिरूप इति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते प्रतिरूपो हैवास्य प्रजायामाजायते नाप्रतिरूप ॥ ११ ॥

स होवाच बालाकिर्य एवैष च्छायायां पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मा मैतस्मिन्संवादयिष्ठा द्वितीयोऽनपग इति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते विन्दते द्वितीयान् द्वितीयवान्हि भवति ॥ १२ ॥

स होवाच बालाकिर्य एवैष प्रतिश्रुत्कायां पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मा मैतस्मिन्संवादयिष्ठा असुरिति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते न पुरा कालात्संमोहमेति ॥ १३ ॥

स होवाच बालाकिर्य एवैष शब्दे पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मा मैतस्मिन्संवादयिष्ठा मृत्युरिति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते न पुरा कालात्प्रैतीति॥ १४ ॥

स होवाच बालाकिर्य एवैतत्पुरुषः सुप्तः स्वप्न्यया चरति तमेवाहमुपास इति तं होवाचाजातशत्रुर्मा मैतस्मिन्संवादयिष्ठा यमो राजेति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते सर्वं हास्मा इदं श्रैष्ठ्याय यम्यते ॥ १५ ॥

स होवाच बालाकिर्य एवैष शरीरे पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मा मैतस्मिन्संवादयिष्ठाः प्रजापतिरिति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते प्रजायते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति ॥ १६ ॥

स होवाच बालाकिर्य एवैष दक्षिणेऽक्षिणि पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मा मैतस्मिन्संवादयिष्ठा वाच आत्माऽग्नेरात्मा ज्योतिष आत्मेति वा अहमेतमुपास इति स यो हैतमेवमुपास्त एतेषां सर्वेषामात्मा भवति ॥ १७ ॥

स होवाच बालाकिर्य एवैष सव्येऽक्षिणि पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मा मैतस्मिन्संवादयिष्ठाः सत्यस्यात्मा विद्युत आत्मा तेजस आत्मेति वा अहमेतमुपास इति स यो हैतमेवमुपास्त एतेषां सर्वेषामात्मा भवति ॥ १८ ॥

तत उ ह बालाकिस्तूष्णीमास तं होवाचाजातशत्रुरेतावन्नु बालाका३ इत्येतावद्धीति होवाच बालाकिस्तं होवाचाजातशत्रुर्मृषा वै खलु मा संवादयिष्ठा ब्रह्म ते ब्रवाणीति यो वै बालाक एतेषां पुरुषाणां कर्ता यस्य वैतत्कर्म स वै वेदितव्यस्तत उ ह बालाकिः समित्पाणिः प्रतिचक्रम उपायानीति तं होवाचाजातशत्रुः प्रतिलोमरूपमेतन्मन्ये यत्क्षत्रियो ब्राह्मणमुपनयते हि व्येव त्वा ज्ञपयिष्यामीति तं ह पाणावभिपद्य प्रवव्राज तौ ह सुप्तं पुरुषमाजग्मतुस्तं हाजातशत्रुरामन्त्रयांचक्रे बृहत्पाण्डरवासः सोमराजन्निति स उ ह शिश्य एव तत उ हैनं यष्ट्या विचिक्षेप स तत एव समुत्तस्थौ तं होवाचाजातशत्रुः क्वैष एतद्बालाके पुरुषोऽशयिष्ट क्वैतदभूत्कुत एतदागादिति तत उ ह बालाकिर्न विजज्ञे तं होवाचाजातशत्रुर्यत्रैष एतद्बालाके पुरुषोऽशयिष्ट यत्रैतदभूद्यत एतदागादिति हिता नाम पुरुषस्य नाड्यो हृदयात्पुरीततमभिप्रतन्वन्ति तद्यथा सहस्रधा केशो विपाटितस्तावदण्व्यः पिङ्गलस्याणिम्नस्तिष्ठन्ति शुक्लस्य कृष्णस्य पीतस्य लोहितस्य च तासु तदा भवति यदा सुप्तः स्वप्नं न कंचन पश्यति ॥१९॥

अथास्मिन्प्राण एवैकधा भवति तदेनं वाक् सर्वैर्नामभिः सहाप्येति चक्षुः सर्वै रूपैः सहाप्येति श्रोत्रं सर्वैः शब्दैः सहाप्येति मनः सर्वैर्ध्यानैः सहाप्येति स यदा प्रतिबुध्यते यथाऽग्नेर्ज्वलतः सर्वा दिशो विस्फुलिङ्गा विप्रतिष्ठेरन्नेवमेवैतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकाः स एष प्राण एव प्रज्ञात्मेदं शरीरमात्मानमनुप्रविष्ट आ लोमभ्य आ नखेभ्यस्तद्यथा क्षुरः क्षुरधाने वोपहितो विश्वंभरो वा विश्वंभरकुलाय एवमेवैष प्रज्ञात्मेदं शरीरमात्मानमनुप्रविष्ट आ लोमभ्य आ नखेभ्यस्तमेतमात्मानमेत आत्मानोऽन्ववस्यन्ते यथा श्रेष्ठिनं स्वास्तद्यथा श्रेष्ठी स्वैर्भुङ्क्ते यथा वा स्वाः श्रेष्ठिनं भुञ्जन्त्येवमेवैष प्रज्ञात्मैतैरात्मभिर्भुङ्क्त एवमेवैत आत्मान एतमात्मानं भुञ्जन्ति स यावद्ध वा इन्द्र एतमात्मानं न विजज्ञे तावदेनमसुरा अभिबभूवुः स यदा विजज्ञेऽथ हत्वाऽसुरान्विजित्य सर्वेषां च देवानां श्रैष्ठ्यं

१ स शा॰ सं॰ मे॰ ।

स्वाराज्यमाधिपत्यं पर्येत्यथो एवंवं विद्वान्सर्वान्पाप्मनोऽपहत्य सर्वेषां च भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं पर्येति य एवं वेद य एवं वेद ॥ २० ॥

इति शाङ्खायनारण्यके षष्ठोऽध्यायः ॥ ६ ॥

---

अथ सप्तमोऽध्यायः ।

ॐ ऋतं वदिष्यामि सत्यं वदिष्यामि तन्मामवतु तद्वक्तारमवत्ववतु मामवतु वक्तारं मयि भर्गो मयि महो वाङ्मे मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठितमाविराविर्मैर्याभूर्वेद सामरसौ-णीर्ष्टेनं मा मा हिंसीरनेनाधीतेनाहोरात्रान्संधसाम्यत्र इळा नम इळा नम ऋषिभ्यो मन्त्रकृद्भ्यो मन्त्रपतिभ्यो नमोऽस्तु देवेभ्यः शिवा नः शंतमा भव सुमृळीका सरस्वती मा ते व्योम संदृश्यद्ब्धं मन इषिरं चक्षुः सूर्यो ज्योतिषां श्रेष्ठो दीक्षे मा मा हिंसीः ॥ १ ॥

अथातः संहिताया उपनिषत्पृथिवी पूर्वरूपं द्यौरुत्तररूपं वायुः संहितेति शौरवीरो माण्डूकेय आकाशः संहितेत्यस्य माक्षव्यो वेदयांचक्रे सैहापरिह्नतो मेने न मेऽस्य पुत्रेण समगादिति परिह्नतो मेन इत्यागस्त्यः समानं ह्येव पितुश्च पुत्रस्य च वायुश्चाऽऽकाशश्चेत्यधिदैवतमथाध्यात्मं वाक् पूर्वरूपं मन उत्तररूपं प्राणः संहितेति शौरवीरो माण्डूकेयोऽथ ह स्मास्य पुत्र आह दीर्घो मनसा वा अग्रे कीर्तयति तद्वाचा वदति तस्मान्मन एव पूर्वरूपं वागुत्तररूपं मनो वाक् प्राणस्त्वेव संहित इति स एषोऽश्वरथः प्रष्टिवाहनो मनो वाक् प्राणः संहितः स्वर्गं लोकं गमयति स य एवमेतां संहितां वेद संधीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेतीति नु माण्डूकेयानाम् ॥२॥

शाकल्यस्य पृथिव्याग्निः पृथिवी वागनुव्याहारः स यदि निर्भुजः खलु वैव यं मध्यमां वाक् प्राणेन माता जाया प्रज्ञा नाम्र्हद्वाविर्वाचि सर्वमुत्तमम् ॥ ३ ॥

---

१ ख. मैप्याष्ट्° । २ क. शारिणिः । ३ ष. मन्त्रपति. । ४ ख. सहापि परिवृतो । ५ क. अथ शाकल्यस्य । अयं खण्ड. पीषपुस्तके नास्ति । पाठभेदस्तेनाधोभागे स्वीकृतः । ६ ष. भूऽह्नविति ।

अथ शाकल्यस्य पृथिवी पूर्वरूपं द्यौरुत्तररूपं वायुः संहिता वृष्टिः संधिः पर्जन्य संधाता तदुतापि यत्रैतद्बलवदनुगृह्णन्महामेघा वृष्टिं वर्षन्ति द्यावापृथिव्यौ समधत्तामित्यधिदैवतमथाध्यात्मं पुरुषोऽयं सर्वमाण्डं द्वे विदले भवतस्तत्रेदमेव पूर्वरूपमिदमुत्तररूपं तत्रायमन्तरेणाऽऽकाशो यथाऽसौ द्यावापृथिव्योरन्तरेणाऽऽकाशस्तस्मिन्नेतस्मिन्नाकाशे प्राण आयत्तो भवति यथाऽमुष्मिन्नाकाशे वायुरायत्तो भवति यथाऽमूनि त्रीणि ज्योतींष्येवमिमानि पुरुषे त्रीणि ज्योतींषि यथाऽसौ दिव्यादित्य एवमिदं शिरसि चक्षुर्यथाऽसावन्तरिक्षे विद्युदेवमिदमात्मनि हृदयं यथाऽयमग्निः पृथिव्यामेवमिदमुपस्थे रेत एवमिव ह स्म सर्वत आत्मानमनुविधायाऽऽहेदमेव पूर्वरूपमिदमुत्तररूपं मनो वाक् प्राणस्त्वेव संहित इति स एषोऽश्वरथः प्रष्टिवाहनो मनो वाक् प्राणः संहितः स्वर्गं लोकं गमयति स य एवमेतां संहितां वेद संधीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति ॥ ४ ॥

पृथिवी पूर्वरूपं द्यौरुत्तररूपं वायुः संहिता दिशः संधिरादित्यः संधातेति वैश्वामित्र इत्यधिदैवतमथाध्यात्मं वाक्पूर्वरूपं मन उत्तररूपं प्राणः संहिता श्रोत्रं संधिश्चक्षुः संधाता स य एवमेतां संहितां वेद संधीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति ॥ ५ ॥

अग्निः पूर्वरूपं चन्द्रमा उत्तररूपं विद्युत्संहितेति सूर्यदैवत इत्यधिदैवतमथाध्यात्मं वाक् पूर्वरूपं मन उत्तररूपं सत्यं संहिता स य एवमेतां संहितां वेद संधीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति ॥ ६ ॥

पृथिवी पूर्वरूपं द्यौरुत्तररूपं कालः संहितेति राथेय इत्यधिदैवतमथाध्यात्मं वाक् पूर्वरूपं मन उत्तररूपमात्मा संहिता स य एवमेतां संहितां वेद संधीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति ॥ ७ ॥

वाक् पूर्वरूपं मन उत्तररूपं विद्या संहितेति पौष्करसादिः स य एवमेतां संहितां वेद संधीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति ॥ ८ ॥

---

१ क. मेघो वृष्टिं वर्षति । २ ग. यथायं ।

अथातोऽनुव्याहाराः प्राणो वंश इति विद्यात्स य एनं प्राणं वंशं ब्रुवन्परमुपवदेच्छक्नुवन्कश्चिच्चेन्मन्येत प्राणं वंशं समधाः प्राणं वंशं समधित्सितुं न शक्नोषीरयीत्थ प्राणस्त्वा वंशो हास्यतीत्येनं ब्रूयादथ चेदशक्नुवन्मन्येत प्राणं वंशं समधित्सीस्तन्नाशकः संधातुं प्राणस्त्वा वंशो हास्यतीत्येवैनं ब्रूयाद्यथानुरूपाच ब्रुवन्वाऽब्रुवन्वा ब्रूयादभ्याशमेव यत्तथा स्यान्न त्वेवान्यत्कुशला-द्ब्राह्मणं ब्रूयादतिशुन्न एव ब्राह्मणं ब्रूयान्नातिशुन्नेन च ब्राह्मणं ब्रूयान्नमोऽस्तु ब्राह्मणेभ्य इति शौरवीरो माण्डूकेयः ॥ ९ ॥

स यदि प्राणं वंशं ब्रुवन्तं परमुपवदेच्छक्नुवन्तं चेन्मन्येत प्राणं वंशं समधित्सिषं प्राणं वंशं समधित्सितुं न शक्नोषीरयीत्थ प्राणस्त्वा वंशो हास्यतीत्येनं ब्रूयादथ चेदशक्नुवन्तं मन्येत प्राणं वंशं समधित्सीस्तन्नाशकः संधातुं प्राणस्त्वा वंशो हास्यतीत्येवैनं ब्रूयाद्यथानुरूपाच ब्रुवन्तं वाऽब्रुवन्तं वा ब्रूयादभ्याशमेव यत्तथा स्यान्न त्वेवान्यत्कुशलाद्ब्राह्मणं ब्रूयादतिशुन्न एव ब्राह्मणं ब्रूयान्नातिशुन्नेन च ब्राह्मणं ब्रूयान्नमोऽस्तु ब्राह्मणेभ्य इति शौरवीरो माण्डूकेयः ॥ १० ॥

अथातो निर्भुजप्रवादाः पृथिव्यायतनं निर्भुजं दिवायतनं प्रतृण्णमन्तरिक्षायतनमुभयमन्तरेण स य एनं निर्भुजं ब्रुवन्परमुपवदेत्पृथिवीं देवतामारः पृथिवी त्वा देवता रिप्स्यतीत्येनं ब्रूयादथ यदि प्रतृण्णं ब्रुवन्परमुपवदेद्दिवं देवतामारो द्यौस्त्वा देवता रिप्स्यतीत्येनं ब्रूयादथ यद्युभयमन्तरेण ब्रुवन्परमुपवदेदन्तरिक्षं देवतामारोऽन्तरिक्षं त्वा देवता रिप्स्यतीत्येनं ब्रूयाद्यद्धि संधिं विवर्तयति तन्निर्भुजस्य रूपमथ यच्छुद्धे अक्षरे अभिव्याहरति तत्प्रतृण्णस्याग्र उ एवोभयमन्तरेणोभयं व्याप्तं भवत्यन्नाद्यकामो निर्भुजं ब्रूयात्स्वर्गकामः प्रतृण्णमुभयकाम उभयमन्तरेण स य एनं निर्भुजं ब्रुवन्परमुपवदेद्व्योष्ठा अधराभ्यां स्थानाभ्यामित्येनं ब्रूयादथ यदि प्रतृण्णं ब्रुवन्परमुपवदेद्व्योष्ठा उत्तराभ्यां स्थानाभ्यामित्येवैनं ब्रूयाद्यस्त्वेवोभयमन्तरेणाह तस्य नास्त्यपवादो यथानुरूपाच ब्रुवन्वाऽब्रुवन्वा ब्रूयादभ्याशमेव यत्तथा स्यान्न त्वेवान्यत्कुशला-

१ °त्सित न । २ क. °स्याद्य °। ३ क. °पातुक° । ४ अ ब. °भुजा प° । ५ ख. °त्येवैनं । ६ यन्ति व° ।

ब्राह्मणं ब्रूयादतिद्युम्न एव ब्राह्मणं ब्रूयान्नातिद्युम्नेन चै ब्राह्मणं ब्रूयान्नमोऽस्तु ब्राह्मणेभ्य इति शौरवीरो माण्डूकेयः ॥ ११ ॥

अथ खल्वाहुर्निर्भुजवक्त्राः पूर्वमेवाक्षरं पूर्वरूपमुत्तरमुत्तररूपं यकारवकारावन्तरेण सा संहितेति स य एवमेतां संहितां वेद संधीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति ॥ १२ ॥

अथ वै वयं ब्रूमो निर्भुजवक्त्राः स्म इति ह स्माऽऽह ह्रस्वो माण्डूकेयः पूर्वमेवाक्षरं पूर्वरूपमुत्तरमुत्तररूपं तत्राऽसौ मात्रा पूर्वरूपोत्तररूपे अन्तरेण येन संधिं विवर्तयति येन मात्रामात्रं विभजति येन स्वरात्स्वरं विज्ञापयति सा संहितेति स य एवमेतां संहितां वेद संधीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति ॥ १३ ॥

अथ ह स्मास्य पुत्र आह मध्यमः प्रातियोधी पुत्रो मगधवासी पूर्वमेवाक्षरं पूर्वरूपमुत्तरमुत्तररूपं तत्राऽसौ मात्रा संधिविज्ञापनी साम तद्भवति सामैवाहं संहितां मन्य इति तदेतदृचाऽभ्युदितं मा नैस्तेनेभ्यो ये अभिद्रुहस्पदे निरामिणो रिपवोऽन्नेषु जागृधुः । आदेवानामोह ते विव्रयो हृदि बृहस्पते न परः साम्नो विदुरिति[1] स य एवमेतां संहितां वेद संधीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति ॥ १४ ॥

वाक् प्राणेन संधीयत इति कौण्ठरव्यः प्राणः पवमानेन पवमानो विश्वैर्देवैर्विश्वे देवाः स्वर्गेण लोकेन स्वर्गो लोको ब्रह्मणा सैषाऽवरपरा संहिता स य एवमेतामवरपरां संहितां वेदैवं हैव स प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन संधीयते यथैषाऽवरपरा संहिता स यदि परेण चोपसृष्टः स्वेन वाऽर्थेनाभिव्याहरेदभिव्याहरन्नेव विद्यादिदं संहिताऽगमद्द्विषो देवानभिव्याहारार्थमेवं भविष्यतीत्येतेनावरपरेण यथा हैव तद्भवति ॥ १५ ॥

१ (२।६।३२)

१ क. चन ।

माता पूर्वरूपं पितोत्तररूपं प्रजा संहितेति भार्गवस्तदेतदेकमेव सर्वमभ्यनूक्तं माता च ह्येवेदं पिता च प्रजा च सर्वं सैषाऽदितिः संहिताऽदितिर्वेदं सर्वं यदिदं किंचिद्विश्वभूतं तदेतदृचाऽभ्युदितमदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः। विश्वे देवा अदितिः पञ्च जना अदितिर्जातमदितिर्जनित्वमिति स य एवमेतां संहितां वेद संधीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति ॥ १६ ॥

जाया पूर्वरूपं पतिरुत्तररूपं पुत्रः संहिता रेतः संधिः प्रजननं संधानमिति स्थविरः शाकल्यः सैषा प्रजापतिः संहिता स य एवमेतां संहितां वेद संधीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति ॥ १७ ॥

प्रज्ञा पूर्वरूपं श्रद्धोत्तररूपं कर्म संहिता सत्यं संधानमिति काश्यपः सैषा सत्यसंहिता तदाहुर्यत्सत्यसंभा देवा इति स य एवमेतां संहितां वेद संधीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति ॥ १८ ॥

वाक् संहितेति पञ्चालचण्डो वाचा वै वेदाः संधीयन्ते वाचा छन्दांसि वाचा मित्राणि संदधाति तथैवैतद्वीते वाचा भाषते या वाचि तदा प्राणो भवति वाक् तदा प्राणं रेहल्यथ यत्स्वपिति या तूष्णीं वा भवति प्राणे तदा वाग्भवति प्राणस्तदा वाचं रेहि तावन्योन्यं रेहळस्तदेतदृचाऽभ्युदितमेकः सुपर्णः स समुद्रमाविवेश स इदं विश्वं भुवनं विचष्टे । तं पाकेन मनसाऽपश्यमन्ततस्तं माता रेह्ळि स उ रेह्ळि मातरमिति वाग्वै माता प्राणो वत्सः स य एवमेतां संहितां वेद संधीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति ॥ १९॥

बृहद्रथंतरेण रूपेण संहिता संधीयत इति ताक्ष्यों वाग्वै रथंतरस्य रूपं प्राणो बृहत उभाभ्यामु खलु संहिता संधीयते वाचा च प्राणेन चैतस्यां ह स्मोपनिषदि संवत्सरं गा रक्षत इति

१ ( १ । ६ । १६ ) २ ( ८ । ६ । १६ )

१ ख. क ग. घ. प्रजायते । २ ख. घ. देवा २ इति । ३ ख. 'नि चण्डाल' ।

तार्क्ष्य एतस्यां ह स्म मात्रायां संवत्सरं गा रक्षत इति तार्क्ष्यः स य एवमेतां संहितां वेद संधीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति ॥ २० ॥

गतिः पूर्वरूपं निवृत्तिरुत्तररूपं स्थितिः संहितेति जारत्कारव आर्तभागस्तस्यामेतस्यां संहितायां ध्वं(?)त्यो निमेषाः काष्ठाः कलाः क्षणा मुहूर्ता अहोरात्रा अर्धमासा मासा ऋतवः संवत्सराश्च संधीयन्ते सैषा संहि वैतान्कालान्संदधाति कालो गतिनिवृत्तिस्थितीः संदधाति गतिनिवृत्तिस्थितिभिरिदं सर्वं संधीयत इत्यधिदैवतमथाध्यात्मं भूतं पूर्वरूपं भविष्यदुत्तररूपं भवत्संहितेति कालसंधिरेतदेतद्वाऽभ्युदितं महत्तन्नाम गुह्यं पुरुषप्र्येन भूतं जनयो येन भव्यम्। प्रत्नं जातं ज्योतिर्यदस्य प्रियं प्रियाः समविशन्त पञ्चेति स य एवमेतां संहितां वेद संधीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति ॥ २१ ॥

अथातो वालिशिखायनेर्वचः पञ्चेमानि महाभूतानि भवन्तीति ह स्माऽऽह वालिशिखायनिः पृथिवी वायुराकाशमापो ज्योतींषि तानि मिथः संहितानि भवन्त्यथ यान्यन्यानि क्षुद्राणि महाभूतैः संधीयन्ते सैषा सर्वभूतसंहिता स य एवमेतां संहितां वेद संधीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति ॥ २२ ॥

सर्वा वाग्ब्रह्मेति ह स्माऽऽह लौहिक्यो ये तु केचन शब्दा वाचमेव तां विद्यात्तदेष्येतदभिराहाहं रुद्रेभिर्वसुभिश्चरामीति सैषा वाक् सर्वशब्दा भवति स य एवमेतां संहितां वेद संधीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति यथा चैतद्ब्रह्म कामरूपि कामचारि भवत्येवं हैव स सर्वेषु भूतेषु कामरूपी कामचारी भवति य एवं वेद य एवं वेद ॥ २३ ॥

इति शाङ्खायनारण्यके सप्तमोऽध्यायः ॥ ७ ॥

---

१ (८ । १ । २६.) २ (८ । ७ । ११)

---

१ ग. °स्थितिः सं° । २ ख. घ. भिर्तां । ३ ख. ग. ङ. संहिता च । ४ ग. पुरुषं प्र° । ५ क. °दुपेन° ।

अथाष्टमोऽध्यायः ।

ॐ प्राणो वंश इति ह स्माऽऽह स्थविरः शाकल्यस्तद्यथा शाला-
वंशे सर्वेऽन्ये वंशाः समाहिता. स्युरेवमेवैतस्मिन्प्राणे सर्व आत्मा
समाहितस्तस्यैतस्याऽऽत्मनः प्राण ऊष्मरूपमस्थीनि स्पर्शरूपं
मज्जानः स्वररूपं मांसं लोहितमित्येतच्चतुर्थमक्षररूपमिति त्रयं त्रैव
न एतत्प्रोक्तमिति ह स्माऽऽह ह्रस्वो माण्डूकेयस्तस्यैतस्य त्रयस्य
त्रीणीतः षष्टिः शतानि भवन्ति संधीनां त्रीणीतस्तानि सप्त विंशतिः
शतानि भवन्ति सप्त वै विंशतिः शतानि संवत्सरस्याहोरात्राणां
तत्संवत्सरस्याहोरात्राण्याप्नोति स य एष संवत्सरसंमानश्चक्षु-
र्मयः श्रोत्रमयश्छन्दोमयो मनोमयो वाङ्मय आत्मा स य एवमेतं
संवत्सरसंमानं चक्षुर्मयं श्रोत्रमयं छन्दोमयं मनोमयं वाङ्मयमा-
त्मानं वेद संवत्सरस्य सायुज्यं सलोकतां सरूपतां सभक्षतामश्नुते
पुत्री पशुमान्भवति सर्वमायुरेतीत्यस्याऽऽह्णिकेयो वेदयांचक्रे ॥ १ ॥

अथ कौण्ठरव्यस्त्रीणि षष्टि शतान्यक्षराणां त्रीणि षष्टिः शता-
न्यूष्मणां त्रीणि षष्टिः शतानि संधीनां यान्यक्षराण्यवोचामाहानि
तानि यान्यूष्मणो रात्रयस्ता यान्संधीनवोचामाहोरात्राणां ते
संधय इत्यधिदैवतमथाध्यात्मं यान्यक्षराण्यधिदैवतमवोचामा-
स्थीनि तान्यध्यात्मं यानूष्मणोऽधिदैवतमवोचाम मज्जानस्तेऽ-
ध्यात्ममेष उ ह वै संप्रति प्राणो यन्मज्जैतद्रेतो न वा
ऋते प्राणाद्रेतसः सिद्धिरस्ति यद्वा ऋते प्राणाद्रेतः सिच्ये-
त्पूयेन्न संभवेद्यान्संधीनधिदैवतमवोचाम पर्वाणि तान्य-
ध्यात्मं तस्यैतस्यास्त्रां मज्ज्ञां पर्वणामिति पञ्चैतच्चत्वारिंशच्छ-
तानि भवन्ति संधीनां पञ्चैतस्तदशीतिः सहस्रं भवत्यशीतिः
सहस्रं यार्कलिन्यो बृहतीरहरहनि संपादयन्ति स एषोऽहःसंमा-
नश्चक्षुर्मयः श्रोत्रमयश्छन्दोमयो मनोमयो वाङ्मय आत्मा स य
एवमेतदहःसंमानं चक्षुर्मयं श्रोत्रमयं छन्दोमयं मनोमयं वाङ्मय-
मात्मानं वेदाह्नां सायुज्यं सलोकतां सरूपतां सभक्षतामश्नुते
पुत्री पशुमान्भवति सर्वमायुरेति ॥ २ ॥

चत्वारः पुरुषा इति बाध्व. शरीरपुरुषश्छन्द पुरुषो वेद-
पुरुषो महापुरुष इति शरीरपुरुष इति यमवोचाम य एवायं

१ ख. बार्कलिनो । २ क. ग. म—त्मस्यः ।

दैहिक आत्मा तस्यैतस्य योऽयमशरीरः प्रज्ञात्मा स रसश्छन्दः-
पुरुष इति यमवोचामाक्षरसमान्नाय एव तस्यैतस्याकारो
रसो वेदपुरुष इति यमवोचाम येन वेदान्वेद ऋग्वेदं यजु-
र्वेदं सामवेदमिति तस्यैतस्य ब्रह्म रसस्तस्माद्ब्रह्मिष्ठं ब्रह्माणमृ-
त्विजं कुर्वीत यो यज्ञस्योल्बणं विद्यान्महापुरुष इति यमवोचाम
संवत्सर एव तस्यैतस्यासावादित्यो रसः स यश्चायमशरीरः
प्रज्ञात्मा यश्चासावादित्य एकमेतदिति विद्यात्तदेतदृचाऽभ्यु-
दितम् ॥ ३ ॥

चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः । आ प्रा
द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्चेत्येतामेवानु-
विधा संहितां संधीयमानां मन्यत इति ह स्माऽऽह बाध्व एतमु
हैव बह्वृचा महदुक्थे मीमांसन्त एतमग्नावध्वर्यव एतं महाव्रते
छन्दोगा एतमस्यामेतमन्तरिक्ष एतं दिव्येतमग्नावेतं वायावेतं चन्द्र-
मस्येतं नक्षत्रेष्वेतमप्स्वेतमोषधीष्वेतं सर्वेषु भूतेष्वेतमक्षरेष्वेतमेव
ब्रह्मेत्युपासते तदेतदृचाऽभ्युदितम् ॥ ४ ॥

उद्वयं तमसस्परि ज्योतिष्पश्यन्त उत्तरम् । देवं देवत्रा सूर्य-
मगन्म ज्योतिरुत्तममिति स एषोऽक्षरसंमानश्चक्षुर्मयः श्रोत्रमय-
श्छन्दोमयो मनोमयो वाङ्मय आत्मा स य एवमेतमक्षरसंमानं
चक्षुर्मयं श्रोत्रमयं छन्दोमयं मनोमयं वाङ्मयमात्मानं परस्मै
शंसति दुग्धदोहा अस्य वेदा भवन्त्यभागो वाचि भवत्यभागो
नाके तदेतदृचाऽभ्युदितम् ॥ ५ ॥

यस्तित्याज सचिविदं सखायं न तस्य वाच्यपि भागो
अस्ति । यदीं शृणोत्यलकं शृणोति न हि प्रवेद सुकृतस्य पन्था-
मिति नास्यानूक्ते वाचो भागो अस्तीत्येव तदाह तन्न परस्मा
एतदहः शंसेन्नाग्निं चिनुयान्न महाव्रतेन स्तुयान्नैतदात्मनोऽपिहीया

१ (१।८।७) २ (१।४।८) ३ (८।२।२४)

१ क. पन्था इ० २ ग. वतस्य ३ क. श्रुणो. ४ ग. घ. °ते छन्दोगा इत्यादि°

प्रति स यथायमशरीरः प्रज्ञात्मा यथासावादित्य एवमेतावादित्यश्चोचाम तौ यत्र विमर्दयेते ॥ ६ ॥

चन्द्रमा इवाऽऽदित्यो दृश्यते न रश्मयः प्रादुर्भवन्ति लोहिनी द्यौर्भवति यथा मञ्जिष्ठा व्यस्तः पायुर्भवति संपरेतोऽस्याऽऽत्मानं चिरमिव जीविष्यतीति विद्यात्स यत्करणीयं मन्येत तत्कुर्यादथाप्यादर्शे वोदके वा जिह्मशिरसं वाऽशिरसं वाऽऽत्मानं पश्येन्न वा पश्येत्तदप्येवमेव विद्यादथापि च्छिन्ना छाया भवति न वा भवति तदप्येवमेव विद्यादथापि च्छिद्र इवाऽऽदित्यो रथनाभिरिवाऽऽलक्ष्यायेत्तदप्येवमेव विद्यादथापि नील इवाभिदृश्यते यथा मयूरग्रीवा महामेघे वा मरीचीरिव पश्येदनभ्रे वा विद्युतः पश्येदभ्र एवां न पश्येत्तदप्येवमेव विद्यादथाप्यपिधायाक्षिणी उपेक्षेत यथैतद्राटकानीव न पश्येत्तदप्येवमेव विद्यादथाप्यपिधाय कर्णा उपासीत य एषोऽग्नेरिव ज्वलतः शब्दो रथस्येवोपब्दिस्तं न यदा शृणुयात्तदप्येवमेव विद्यादथापि विपर्यस्ते कनीनिके दृश्येते द्विजिह्वे वा न वा दृश्येते तदप्येवमेव विद्यात्स योऽतोऽश्रुतोऽमतोऽविज्ञातोऽदृष्टोऽनादिष्टोऽघुष्टः श्रोता मन्ता विज्ञाता द्रष्टाऽऽदेष्टा घोष्टा सर्वेषां भूतानामान्तरः पुरुषः स म आत्मेति विद्यात्स उत्क्रामन्नेतमशरीरं प्रज्ञात्मानमभिसंपद्यते विजहातीतरं दैहिकं सैषा सर्वस्यै वाच उपनिषत्सर्वा हैनाः सर्वस्यै वाच उपनिषद इमा त्वेवमाचक्षते ॥ ७ ॥

पृथिव्या रूपं स्पर्शा अन्तरिक्षस्योष्माणो दिवः स्वरा अग्ने रूपं स्पर्शा वायोरूष्माण आदित्यस्य स्वरा ऋग्वेदस्य रूपं स्पर्शा यजुर्वेदस्योष्माणः सामवेदस्य स्वरा रथंतरस्य रूपं स्पर्शा वामदेव्यस्योष्माणो बृहतः स्वराः प्राणस्य रूपं स्पर्शा अपानस्योष्माणो व्यानस्य स्वराः प्राणस्य रूपं स्पर्शा अपानस्योष्माणो मनसः स्वरा प्राणस्य रूपं स्पर्शा अपानस्योष्माण उदानस्य स्वरा इति पुनर्दत्त एष उ हैव सर्वां वाचं वेद य एवं वेद ॥ ८ ॥

अथ खल्वियं दैवी वीणा भवति तदनुकृतिरसौ मानुषी वीणा भवति यथयेव सम्वन्नी तर्बवती भवत्यवमेनामी अस्तवती

तर्मन्वती भवति तद्यथाऽस्याः शिर एवममुष्याः शिरस्तद्यथाऽस्यै वंश एवममुष्या दण्डस्तद्यथाऽस्या उदरमेवममुष्या अम्भणं तद्यथाऽस्यै मुखनासिके अक्षिणी इत्येवममुष्याश्छिद्राणि तद्यथाऽस्या अङ्गुलिनिग्रहा उपस्तरणानीत्येवममुष्याः पर्वाणि तद्यथाऽस्या अङ्गुलय एवममुष्यास्तर्कवस्तद्यथाऽस्यै जिह्वैवममुष्या वादनं तद्यथाऽस्याः स्वरा एवममुष्याः स्वरास्तद्यथा हैवेयं रोमशेन चर्मणा पिहिता भवत्येवमेवासौ रोमशेन चर्मणा पिहिता भवति रोमशेन ह स्म चर्मणा पुरा वीणा अपिदधति सैषा दैवी वीणा भवति स य एवमेतां दैवीं वीणां वेद श्रुतवदनतमो भवति भूमिं मास्य कीर्तिर्भवति शुश्रूषन्ते हास्य पर्षत्सु भाष्यमाणस्येदमस्तु यदयमीहत यत्राऽऽर्या वाचं वदन्ति विदुरेनं तत्र ॥ ९ ॥

अथातस्ताण्डविन्दस्य वचस्तद्यथाऽकुशलेन वादयित्रा वीणाऽऽरब्धा न तत्कृत्स्नं वीणार्थं साधयत्येवमेवाकुशलेन वक्त्रा वागारब्धा न तत्कृत्स्नं वागर्थं साधयति तद्यथा हैवेयं कुशलेन वादयित्रा वीणारब्धा कृत्स्नं वीणार्थं साधयत्येवमेव कुशलेन वक्त्रा वागारब्धा कृत्स्नं वागर्थं साधयति तस्यै वा एतस्यै वीणार्थं या लिपिः सा संहितेति कात्यायनीपुत्रो जातूकर्ण्योऽथ ह स्मैतं कृत्स्नं हारीतो ब्राह्मणमेवोदाहरति ॥ १० ॥

प्रजापतिः प्रजाः सृष्ट्वा व्यस्रंसत स च्छन्दोभिरात्मानं समदधात्तच्छन्दोभिरात्मानं समदधत्तस्मात्संहिता तस्यै वा एतस्यै संहितायै णकारो बलं षकारः प्राण आत्मा संहिताऽथैषा ऋग्भिश्चाऽनिरुक्तिस्तानि नखानि रोमाणि व्यञ्जनानीति स योऽत्र विचिकित्सेत्सणकारमेव ब्रूयादिते षकारमिति सणकारमेव ब्रूयादेतमेव योऽत्र विचिकित्सेत्सषकारमेव ब्रूयादेते णकारमिति सषकारमेव ब्रूयात्तौ वा एतौ णकारषकारौ विद्वाननुसंहितमृचोऽधीयीताऽऽयुष्यमिति विद्यादेवमेव विद्याऽथ यदितिहासपुराणं यच्चान्यदि[१] विहर्तीकृत्यैवाधीयीत तदप्येवमेव विद्यात् यद्वयमनुसंहितमृचोऽधीमहे यच्च माण्डूकेयाः पमध्याय प्रथमसनेन नो

णकारपकारा उपाप्ताविति ह स्माऽऽह ह्रस्वो माण्डूकेयोऽथ यद्वय-मनुसंहितमृचोऽधीमहे यच्च स्वाध्यायमधीमहे तेन नो णकारप-कारा उपाप्ताविति ह स्माऽऽह स्थविरः शाकल्य एतद्ध स्म वै तद्वि-द्वांस आहुः कावषेयाः किमर्था वयं यक्ष्यामहे किमर्था वयमध्ये-ष्यामहे वाचि हि प्राणं जुहुमः प्राणे वाचं यो ह्येव प्रभवः स एवाप्यय इति ता एताः संहिता नानन्तेवासिने ब्रूयान्नासंवत्सर-वासिने नाप्रवक्त्रे इत्याचार्या इत्या-चार्याः ॥ ११ ॥

इति शाङ्खायनारण्यकेऽष्टमोऽध्यायः ॥ ८ ॥

---

अथ नवमोऽध्यायः ।

ॐ तत्सवितुर्वृणीमहे वयं देवस्य भोजनम् । श्रेष्ठं सर्वधातमं तुरं भगस्य धीमहि । तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् । अदब्धं मन इषिरं चक्षुः सूर्यो ज्योतिषां श्रेष्ठो दीक्षे मा मा हिंसीः ॥ १ ॥

यो ह वै ज्येष्ठं च श्रेष्ठं च वेद ज्येष्ठश्च ह वै श्रेष्ठश्च स्वानां भवति प्राणो वै ज्येष्ठश्च श्रेष्ठश्च यो ह वै वसिष्ठां वेद वसिष्ठो ह स्वानां भवति वाग्वै वसिष्ठा यो ह वै प्रतिष्ठां वेद प्रतितिष्ठत्य-स्मिंश्च लोकेऽमुष्मिंश्च चक्षुर्हि प्रतिष्ठा यो ह वै संपदं वेद सं हास्मै कामाः पद्यन्ते श्रोत्रं ह वा उ संपद्यो ह वा आयतनं वेदाऽऽय-तनो ह स्वानां भवति मनो वा आयतनमथ हेमा देवताः प्रजा-पतिं पितरमेत्याब्रुवन्को वै नः श्रेष्ठ इति स होवाच प्रजापतिर्य-स्मिन्व उत्क्रान्ते शरीरं पापिष्ठमिव मन्येत स वै श्रेष्ठ इति ॥२॥

सा ह वागुच्चक्राम यथा मूका अवदन्तः प्राणन्तः प्राणेन पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण ध्यायन्तो मनसैवमिति ॥ ३ ॥

---

१ ( ५ । ४ । २५ ) २ ( ३ । ४ । १० )

---

१ घ. °र्दधा. । २ क. प्राप्त° ।

चक्षुर्होच्चक्राम यथाऽन्धा अपश्यन्तः प्राणन्तः प्राणेन वदन्तो वाचा शृण्वन्तः श्रोत्रेण ध्यायन्तो मनसैवमिति ॥ ४ ॥

श्रोत्रं होच्चक्राम यथा बधिरा अशृण्वन्तः प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा ध्यायन्तो मनसैवमिति ॥ ५ ॥

मनो होच्चक्राम यथा बाला अमनसः प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेणैवमिति ॥ ६ ॥

प्राणो होच्चक्राम ततस्तद्यथेह सैन्धवः सुहयः पड्वीशशङ्कून्समखिदेदेवमसौ प्राणान्समखिदत्ते ह समेत्योचुर्भगवन्नोत्क्रमीरिति स होवाच प्राणः किं मे अन्नं भविष्यतीति यत्किंचाऽऽश्वभ्य इत्याऽऽशकुनिभ्य इति किं मे वासो भविष्यतीत्याप इति होचुस्तस्माद्वा अयमशिष्यन्पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधति लम्भुको हास्य वासो भवत्यनग्नो ह भवति तद्ध सैतत्सत्यकामो जाबालो गोश्रुते वैयाघ्रपद्यायोक्त्वोवाचाप्येवं शुष्कस्य स्थाणोः प्रब्रूयाज्जायेरन्नस्य शाखाः प्ररोहेयुः पलाशानीति वनस्पते शतवल्शो विरोहेति द्यां मा लेखीरन्तरिक्षं मा मा हिंसीरिति याज्ञवल्क्यः ॥ ७ ॥

अथ यदि महज्जिगमिषेत्त्रिरात्रं दीक्षित्वाऽमावास्यायां सर्वौषधस्य मन्थं दधिमधुभ्यामुपमन्थ्याग्निमुपसमाधाय परिसमुह्य परिस्तीर्य पर्युक्ष्य दक्षिणं जान्वाच्योत्तरतोऽग्नेः कंसे मन्थं कृत्वा हुत्वा होमान्मन्थे संपातमानयेज्ज्यैष्ठ्याय श्रैष्ठ्याय स्वाहेत्यग्नौ हुत्वा मन्थे संपातमानयेद्वसिष्ठायै स्वाहेत्यग्नौ हुत्वा मन्थे संपातमानयेत्प्रतिष्ठायै स्वाहेत्यग्नौ हुत्वा मन्थे संपातमानयेत्संपदे स्वाहेत्यग्नौ हुत्वा मन्थे संपातमानयेदायतनाय स्वाहेत्यग्नौ हुत्वा मन्थे संपातमानयेत्तत्सवितुर्वृणीमह इति पच्छः प्राश्य तत्सवितुर्वरेण्यमिति पच्छ आचामति महाव्याहृतिभिश्चतुर्थं निर्णिज्य कांस्यं चर्मणि वा स्थण्डिले वा संविशति स यदि स्त्रियं पश्येत्समृद्धं कर्मेति विद्यात्समृद्धं कर्मेति विद्यात् ॥ ८ ॥

इति शाङ्खायनारण्यके नवमोऽध्यायः ॥ ९ ॥

अथ दशमोऽध्यायः ।

ॐ अथात आध्यात्मिकमान्तरमग्निहोत्रमित्याचक्षते । एता ह वै देवताः पुरुष एव प्रतिष्ठिता अग्निर्वाचि वायुः प्राण आदित्यश्चक्षुषि चन्द्रमा मनसि दिशः श्रोत्र आपो रेतस्येतासु ह वै सर्वासु हुतं भवति य एवं विद्वानश्नाति च पिबति चाऽऽशयति च पाययति च सोऽश्नाति स पिबति स तृप्यति स तर्पयति ॥ १ ॥

स तृप्तो वाचं तर्पयति वाक्तृप्ताऽग्निं तर्पयत्यग्निस्तृप्तः पृथिवीं तर्पयति पृथिवी तृप्ता यत्किंच पृथिव्याऽपिहितं भवद्भविष्यद्भूतं तत्सर्वं तर्पयति य एवं विद्वानश्नाति च पिबति चाऽऽशयति च पाययति च सोऽश्नाति स पिबति स तृप्यति स तर्पयति ॥ २ ॥

स तृप्तः प्राणं तर्पयति प्राणस्तृप्तो वायुं तर्पयति वायुस्तृप्त आकाशं तर्पयत्याकाशस्तृप्तो यत्किंचाऽऽकाशेनापिहितं भवद्भविष्यद्भूतं तत्सर्वं तर्पयति य एवं विद्वानश्नाति च पिबति चाऽऽशयति च पाययति च सोऽश्नाति स पिबति स तृप्यति स तर्पयति ॥ ३ ॥

स तृप्तश्चक्षुस्तर्पयति चक्षुस्तृप्तमादित्यं तर्पयत्यादित्यस्तृप्तो दिवं तर्पयति द्यौस्तृप्ता यत्किंच दिवाऽपिहितं भवद्भविष्यद्भूतं तत्सर्वं तर्पयति य एवं विद्वानश्नाति च पिबति चाऽऽशयति च पाययति च सोऽश्नाति स पिबति स तृप्यति स तर्पयति ॥ ४ ॥

स तृप्तो मनस्तर्पयति मनस्तृप्तं चन्द्रमसं तर्पयति चन्द्रमास्तृप्तो नक्षत्राणि तर्पयति नक्षत्राणि तृप्तानि मासांस्तर्पयन्ति मासास्तृप्ता अर्धमासांस्तर्पयन्त्यर्धमासास्तृप्ता अहोरात्रे तर्पयन्त्यहोरात्रे तृप्ते ऋतूंस्तर्पयत ऋतवस्तृप्ताः संवत्सरं तर्पयन्ति संवत्सरस्तृप्तो यत्किंच संवत्सरेणापिहितं भवद्भविष्यद्भूतं तत्सर्वं तर्पयति य एवं विद्वानश्नाति च पिबति चाऽऽशयति च पाययति च सोऽश्नाति स पिबति स तृप्यति स तर्पयति ॥ ५ ॥

स तृप्तः श्रोत्रं तर्पयति श्रोत्रं तृप्तं दिशस्तर्पयति दिशस्तृप्ता अवान्तरदिशस्तर्पयन्त्यवान्तरदिशस्तृप्ता यत्किंचावान्तरदिग्भिर-

पिहितं भवद्भविष्यद्भूतं तत्सर्वं तर्पयति य एवं विद्वानश्नाति च पिबति चाऽऽशयति च पाययति च सोऽश्नाति स पिबति स तृप्यति स तर्पयति ॥ ६ ॥

स तृप्तो रेतस्तर्पयति रेतस्तृप्तमपस्तर्पयत्यापस्तृप्ता नदीस्तर्पयन्ति नद्यस्तृप्ताः समुद्रं तर्पयन्ति समुद्रस्तृप्तो यत्किंच समुद्रेणापिहितं भवद्भविष्यद्भूतं तत्सर्वं तर्पयति य एवं विद्वानश्नाति च पिबति चाऽऽशयति च पाययति च सोऽश्नाति स पिबति स तृप्यति स तर्पयति ॥ ७ ॥

स तृप्तस्तदेतद्वैराजं दशविधमग्निहोत्रं भवति तस्य प्राण एवाऽऽहवनीयोऽपानो गार्हपत्यो व्यानोऽन्वाहार्यपचनो मनो धूमो मन्युरर्चिर्यिता अङ्गाराः श्रद्धा पयो वाक् समित्सत्यमाहुतिः प्रज्ञात्मा स रसस्तदेतद्वैराजं दशविधमग्निहोत्रं हुतं भवति रोहाभ्यां रोहाभ्यामभ्यारुह्यमभि स्वर्गं लोकं गमयति य एवं विद्वानश्नाति च पिबति चाऽऽशयति च पाययति चाथ य इदमविद्वानग्निहोत्रं जुहोति यथाऽङ्गारानपोह्य भस्मनि हुतं तादृक्तस्यात्तादृक्तस्यात् ॥ ८ ॥

इति शाङ्खायनारण्यके दशमोऽध्यायः ॥ १० ॥

---

अथैकादशोऽध्यायः ।

ॐ प्रजापतिर्वा इमं पुरुषमसृजत तस्मिन्नेता देवता आवेशयदग्निं वाच्यग्निं प्राणे वायुमपाने विद्युतमुदाने पर्जन्यं चक्षुष्यादित्यं मनसि चन्द्रमसं श्रोत्रे दिशः शरीरे पृथिवीं रेतस्यपो बल इन्द्रं मन्यावीशानं मूर्धन्याकाशमात्मनि ब्रह्म स यथा महानपूतकुम्भः पिन्वमानास्तिष्ठेदेवं इव समुत्स्थायेत्थ हैमा देवता ईक्षांचक्रिरे क्रियमस्माभिः पुरुषः करिष्यति किं वा वयमनेन हन्तास्मान्परिक्षिप्यमस्माभिः पुरुषः करिष्यति किं वा वयमनेन हन्तास्मादुत्क्रमामेति ता हैन्चकपुरुय इदं शरीरं रिक्तमिव परिशिरादुत्क्रमामेवि ता हैन्चकपुरुष इदं शरीरं रिक्तमिव परिशिष्टं स हैक्षांचक्रे प्रजापतिरन्धायनमिदं हन्ताहमिमा अशनापापिरं स हैक्षांचक्रे प्रजापतिरन्धायनमिदं हन्ताहमिमा अशनापापिपासाभ्यामुपसृजा३ इति ता हैपसृजे ता हैपसृष्टा गुरुमलप्रयाना इमपैव पुरुषं पुनः प्रत्यागच्छन्तु ॥ १ ॥

वाक्ममेत्यग्निराविवेश प्राणो ममेति वायुराविवेशापानो ममेति वैद्युत आविवेशोदानो ममेति पर्जन्य आविवेश चक्षुर्ममेत्यादित्य आविवेश मनो ममेति चन्द्रमा आविवेश श्रोत्रमस्माकमिति दिश आविविशुः शरीरं ममेति पृथिव्याविवेश रेतोऽस्माकमित्याप आविविशुर्बलं ममेतीन्द्र आविवेश मन्युर्ममेतीशान आविवेश मूर्धा ममेत्याकाश आविवेशाऽऽत्मा ममेति ब्रह्माऽऽविवेश स यथा महान् हस आर्द्र उपसिक्तमूलस्तिष्ठेदेवं ह वै समुपस्पौ ॥ २ ॥

अथायं पुरुषः प्रेष्यन्पुरा संवत्सरात्संवत्सरस्य दृष्टीः पश्यति रिछद्रा छाया भवति न वा भवति महामेघे ग्रा मरीचीरिव पश्येदनभ्रे वा विद्युतः पश्येदभ्र एनां न पश्येदक्षिणी वाऽपिधाय वराटकानीव न पश्यति कर्णौ वाऽपिधायोपब्दिमिव न शृणोति नास्मिँल्लोके रमते नैनं मनश्छन्दयतीति मत्यसदर्शनानि ॥ ३ ॥

अथ स्वप्नाः पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्ति वराह एनं हन्ति मर्कट एनं हन्ति विसानि खादयति सुवर्णं भक्षयित्वाऽवगिरत्येकः पौण्डरीकं धारयति गां सवत्सां दक्षिणामुखो नलदमाली व्राजयति स य एतेषां किंचित्पश्येत्पाण्डुरदर्शनां कालीं स्त्रीं मुक्तकेशां मुण्डांस्तैलाभ्यक्तः कौसुम्भपरिधानं शीतान्युष्ट्रारोहणं दक्षिणाशागमनादीनि वीक्ष्योपोष्य पायसं स्थालीपाकं श्रपयित्वा सरूपवत्साया गोः पयसि न त्वेव तु कृष्णाया अग्निमुपसमाधाय परिसमुह्य परिस्तीर्य पर्युक्ष्य दक्षिणं जान्वाच्य स्रुवेणाऽऽज्याहुतीर्जुहोति ॥ ४ ॥

वाचि मेऽग्निः प्रतिष्ठितः स्वाहा प्राणे मे वायुः प्रतिष्ठितः स्वाहाऽपाने मे वैद्युतः प्रतिष्ठित. स्वाहोदाने मे पर्जन्यः प्रतिष्ठितः स्वाहा चक्षुषि म आदित्यः प्रतिष्ठितः स्वाहा मनसि मे चन्द्रमाः प्रतिष्ठितः स्वाहा श्रोत्रे मे दिशः प्रतिष्ठिताः स्वाहा शरीरे मे पृथिवी प्रतिष्ठिता स्वाहा रेतसि म आपः

१ क. ग. ङ. °पुन व°।

प्रतिष्ठिताः स्वाहा बले म इन्द्रः प्रतिष्ठितः स्वाहा मन्यौ म ईशानः प्रतिष्ठितः स्वाहा मूर्धनि म आकाशः प्रतिष्ठितः स्वाहाऽऽत्मनि मे ब्रह्म प्रतिष्ठितं स्वाहेत्यथैतदाज्यावशेषं स्थालीपाके समवनिनीय स्थालीपाकस्योपघातं जुहोति ॥ ५ ॥

वाचि मेऽग्निः प्रतिष्ठितो वाग्घृदये हृदयमात्मनि तत्सत्यं देवानां माऽहमकामो मरिष्याम्यन्नवानन्नादो भूयासं स्वाहा । प्राणे मे वायुः प्रतिष्ठितः प्राणो हृदये हृदयमात्मनि तत्सत्यं देवानां माऽहमकामो मरिष्याम्यन्नवानन्नादो भूयासं स्वाहा । अपाने मे वैद्युतः प्रतिष्ठितोऽपानो हृदये हृदयमात्मनि तत्सत्यं देवानां माऽहमकामो मरिष्याम्यन्नवानन्नादो भूयासं स्वाहा । उदाने मे पर्जन्यः प्रतिष्ठित उदानो हृदये हृदयमात्मनि तत्सत्यं देवाना माऽहमकामो मरिष्याम्यन्नवानन्नादो भूयासं स्वाहा । चक्षुषि म आदित्यः प्रतिष्ठितश्चक्षुर्हृदये हृदयमात्मनि तत्सत्यं देवानां माऽहमकामो मरिष्याम्यन्नवानन्नादो भूयासं स्वाहा । मनसि मे चन्द्रमाः प्रतिष्ठितो मनो हृदये हृदयमात्मनि तत्सत्यं देवानां माऽहमकामो मरिष्याम्यन्नवानन्नादो भूयासं स्वाहा । श्रोत्रे मे दिशः प्रतिष्ठिताः श्रोत्रं हृदये हृदयमात्मनि तत्सत्यं देवानां माऽहमकामो मरिष्याम्यन्नवानन्नादो भूयासं स्वाहा । शरीरे मे पृथिवी प्रतिष्ठिता शरीरं हृदये हृदयमात्मनि तत्सत्यं देवाना माऽहमकामो मरिष्याम्यन्नवानन्नादो भूयासं स्वाहा । रेतसि म आपः प्रतिष्ठिता रेतो हृदये हृदयमात्मनि तत्सत्यं देवानां माऽहमकामो मरिष्याम्यन्नवानन्नादो भूयासं स्वाहा । बले म इन्द्रः प्रतिष्ठितो बलं हृदये हृदयमात्मनि तत्सत्यं देवानां माऽहमकामो मरिष्याम्यन्नवानन्नादो भूयासं स्वाहा । मन्यौ म ईशानः प्रतिष्ठितो मन्युर्हृदये हृदयमात्मनि तत्सत्यं देवानां माऽहमकामो मरिष्याम्यन्नवानन्नादो भूयासं स्वाहा । मूर्धनि म आकाशः प्रतिष्ठितो मूर्धा हृदये हृदयमात्मनि तत्सत्यं देवानां माऽहमकामो मरिष्याम्यन्नवानन्नादो भूयासं स्वाहा । आत्मनि मे ब्रह्म प्रतिष्ठितमात्मा हृदये हृदयमात्मनि तत्सत्यं देवानां माऽहमकामो मरिष्याम्यन्नवानन्नादो भूयासं स्वाहेत्यथैतत्स्थालीपाकशेषमात्मनि समवनिनीय जुहोति ॥ ६ ॥

अश्मा आगतमयस्त्रष्टुभं लोहमौष्णिहं सीसं काकुभं रजतं स्वाराज्यं सुवर्णं गायत्रमन्नं वैराजं तृप्तिरानुष्टुभं नाकं साम्राज्यं बृहस्पतिर्बार्हतं ब्रह्म पाङ्क्तं प्रजापतिरातिच्छन्दसं सावित्री सर्ववेद-च्छन्दसेन च्छन्दसेति ॥ ७ ॥

अश्मेव स्थिरो वसानि आगतेन च्छन्दसा पुरुषो मणिः प्राणः सूत्रमन्नं ग्रन्थिस्तद्ग्रन्थिमुद्ग्रथ्नाम्यन्नकामो मृत्यवे ब्राह्मणमपि सर्वमायुरशीयाऽऽयुष्मान्माऽहमकामो मरिष्याम्यन्नवानन्नादो भूया-सं स्वाहा । अय इव स्थिरो वसानि त्रैष्टुभेन च्छन्दसा पुरुषो मणिः प्राणः सूत्रमन्नं ग्रन्थिस्तद्ग्रन्थिमुद्ग्रथ्नाम्यन्नकामो मृत्यवे ब्राह्मणमपि सर्वमायुरशीयाऽऽयुष्मान्माऽहमकामो मरिष्याम्यन्नवा-नन्नादो भूयासं स्वाहा । लोहमिव स्थिरो वसान्यौष्णिहेन च्छन्दसा पुरुषो मणि प्राणः सूत्रमन्नं ग्रन्थिस्तद्ग्रन्थिमुद्ग्रथ्नाम्यन्नकामो मृत्यवे ब्राह्मणमपि सर्वमायुरशीयाऽऽयुष्मान्माऽहमकामो मरिष्या-म्यन्नवानन्नादो भूयासं स्वाहा । सीसमिव स्थिरो वसानि काकुभेन च्छन्दसा पुरुषो मणिः प्राणः सूत्रमन्नं ग्रन्थिस्तद्ग्रन्थिमुद्ग्रथ्ना-म्यन्नकामो मृत्यवे ब्राह्मणमपि सर्वमायुरशीयाऽऽयुष्मान्माऽहम-कामो मरिष्याम्यन्नवानन्नादो भूयासं स्वाहा । रजतमिव स्थिरो वसानि स्वाराज्येन च्छन्दसा पुरुषो मणि प्राण सूत्रमन्नं ग्रन्थिस्तद्ग्रन्थिमुद्ग्रथ्नाम्यन्नकामो मृत्यवे ब्राह्मणमपि सर्वमायुर-शीयाऽऽयुष्मान्माऽहमकामो मरिष्याम्यन्नवानन्नादो भूयासं स्वाहा । सुवर्णमिव स्थिरो वसानि गायत्रेण च्छन्दसा पुरुषो मणिः प्राणः सूत्रमन्नं ग्रन्थिस्तद्ग्रन्थिमुद्ग्रथ्नाम्यन्नकामो मृत्यवे ब्राह्मणमपि स-र्वमायुरशीयाऽऽयुष्मान्माऽहमकामो मरिष्याम्यन्नवानन्नादो भूयासं स्वाहा । अन्नमिव स्थिरो वसानि वैराजेन च्छन्दसा पुरुषो मणिः प्राणः सूत्रमन्नं ग्रन्थिस्तद्ग्रन्थिमुद्ग्रथ्नाम्यन्नकामो मृत्यवे ब्राह्मण-मपि सर्वमायुरशीयाऽऽयुष्मान्माऽहमकामो मरिष्याम्यन्नवानन्नादो भूयासं स्वाहा । तृप्तिरिव स्थिरो वसान्यानुष्टुभेन च्छन्दसा पुरुषो मणिः प्राण सूत्रमन्नं ग्रन्थिस्तद्ग्रन्थिमुद्ग्रथ्नाम्यन्नकामो मृत्यवे ब्राह्मणमपि सर्वमायुरशीयाऽऽयुष्मान्माऽहमकामो मरिष्याम्यन्नवा-

नन्नादो भूयासं स्वाहा । नाकमिव स्थिरो वसानि साम्राज्येन च्छन्दसा पुरुषो मणिः प्राणः सूत्रमस्य ग्रन्थिस्तद्ग्रन्थिमुद्ग्रथ्नाम्यन्नकामो मृत्यवे ब्राह्मणमपि सर्वमायुरशीयाऽऽयुष्मान्माऽहमन्नकामो मरिष्याम्यन्नवानन्नादो भूयासं स्वाहा । बृहस्पतिरिव स्थिरो वसानि बार्हतेन च्छन्दसा पुरुषो मणिः प्राणः सूत्रमस्य ग्रन्थिस्तद्ग्रन्थिमुद्ग्रथ्नाम्यन्नकामो मृत्यवे ब्राह्मणमपि सर्वमायुरशीयाऽऽयुष्मान्माऽहमन्नकामो मरिष्याम्यन्नवानन्नादो भूयासं स्वाहा । ब्रह्मेव स्थिरो वसानि पाङ्क्तेन च्छन्दसा पुरुषो मणिः प्राणः सूत्रमस्य ग्रन्थिस्तद्ग्रन्थिमुद्ग्रथ्नाम्यन्नकामो मृत्यवे ब्राह्मणमपि सर्वमायुरशीयाऽऽयुष्मान्माऽहमन्नकामो मरिष्याम्यन्नवानन्नादो भूयासं स्वाहा । प्रजापतिरिव स्थिरो वसान्यातिच्छन्दसेन च्छन्दसा पुरुषो मणिः प्राणः सूत्रमस्य ग्रन्थिस्तद्ग्रन्थिमुद्ग्रथ्नाम्यन्नकामो मृत्यवे ब्राह्मणमपि सर्वमायुरशीयाऽऽयुष्मान्माऽहमन्नकामो मरिष्याम्यन्नवानन्नादो भूयासं स्वाहा । सावित्रीव स्थिरो वसानि सर्ववेदच्छन्दसेन च्छन्दसा पुरुषो मणिः प्राणः सूत्रमस्य ग्रन्थिस्तद्ग्रन्थिमुद्ग्रथ्नाम्यन्नकामो मृत्यवे ब्राह्मणमपि सर्वमायुरशीयाऽऽयुष्मान्माऽहमन्नकामो मरिष्याम्यन्नवानन्नादो भूयासं स्वाहेति प्रियायै वा जायायै प्रियायै वाऽन्तेवासिनेऽन्यस्मै वाऽपि यस्मै कामयेत तस्मा उच्छिष्टं दद्यात्सहापि शतं वर्षाणि जीवति पुनः पुनः प्रयुञ्जानो जीवत्येव जीवत्येव ॥ ८ ॥

इति शाङ्खायनारण्यक एकादशोऽध्यायः ॥ ११ ॥

---

अथ द्वादशोऽध्यायः ।

ॐ हस्तिवर्चसं प्रथतां बृहद्यशो यददित्यै तन्वः संबभूव । तन्मह्यं समदुः सर्व एत आदित्यासो आदित्याः संविदानाः ॥ यत्ते वर्चो जातवेदो बृहद्भवत्याहितम् । तेन मा वर्चसा त्वमग्ने वर्चस्विनं कुरु ॥ यच्च वाचा वाक्कृते यच्च हस्तिन्याहितम् । सुवर्णे गोषु यद्वर्चो मयि तद्धस्तिवर्चसा ॥ यदक्षेषु

हिरण्येषु गोष्वश्वेषु यद्यशः । सुरायां पूयमानायां मयि तद्धस्तिवर्चसम् ॥ मयि भर्गो मयि महो मयि यज्ञस्य यद्यशः । तन्मयि प्रजापतिर्दिवि द्यामिव दंहतु ॥ १ ॥

अश्विना सारघेण मासं महान्मधुना पयः । यथा मधुमतीं वाचमावदानि जनेषु । घृतादुल्लुप्तो मधुमान् पयस्वान्धनंजयो धरुणो धारयिष्णुः । रुजन्सपत्नानधरांश्च कृण्वन्नारोह मां महते सौभगाय । प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव । यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम् । अयं स यो नुदतां मे सपत्नानिन्द्र इव वृत्रं पृतनासु साह्ला । अग्निरिव कक्षं विभृत पुरूणि वातेषु नास्तिम्यजम्भो नु प्रार्हि । अयं स नो यो नुदतादीं कील इव वृत्रं वि पुरो रुरोज । अनेनेन्द्रो विमृधो विहत्या शत्रूयतामाभरा भोजनानि ॥ २ ॥

जयेन्द्र शत्रूञ्छूर दस्यूनुग्रं हत्वेव कुलिशेनाऽऽविदृश्य । श्वेव इव शापाद्भ्रणुदास्सपत्नाञ्छ्रयं सपत्ना स्वधितिर्वनेव । अनुवृश्च मध्यात्प्रतिवृश्चोपरिष्टाद्विवृश्च पश्चात्प्रति शूर वृश्च । त्वया प्रणुत्तान्मघवन्नमित्राञ्छूरो रोपन्तं मरुतोऽनुयान्तु । त्वा रुद्रैर्हेतिभिः पिन्वमाना इन्द्रं मन्वाना मरुतो जुषन्तम् । सुपर्णाः कङ्काः प्रशमन्त्वेनान्मदीयतां दंष्ट्री वनेषु । ब्रह्मणुत्तस्य मघवन्नृतन्यतो विश्वगिन्द्र भङ्गाः पतन्तु । मा त्रातारणि सतमाः प्रतिष्ठामिद्दो विप्रानामुपयाति मृत्युम् । अग्रे यन्नास्विन्यवासे समर्पयेन्द्रवतीमपाचितिमिहाऽऽवह । अयं मूर्धा परमेष्ठी सुवर्चाः स जानानामुत्तमश्लोको अस्तु ॥ ३ ॥

भद्रं पश्येम उपसेदुराग्नाचवो दीक्षामृषयः स्वर्विदः । ततः क्षेनं वन्मोजश्च जातं तदस्मै देवा अभिसंनमन्ताम् । धाता विधाता परमोत संदृक् प्रजापतिः परमेष्ठी सुवर्चाः । स्तोमाश्छन्दांसि

१(८।७।४)

निविदो न आहुरेतस्मै राष्ट्रमभिसंनमन्ताम् । अभ्यावर्तध्वमुपसेवताग्निरयं शास्ताऽधिपतिर्नो अस्तु । अस्य विज्ञानमनुसंरभध्वमिमं पश्चादनुजीवाथ सर्वे । अलर्दो नाम जातोऽसि पुरा सूर्यात्पुरोषसः । तं त्वा सपत्नः क्षपणं वेदाथो विष्टम्भजम्भनम् । नार्धे प्रमीयेतेतरे द्विषन्तं फलयेत वाक्यं पृतनाः सहेत । प्रमायुकं तस्य द्विषन्तमाहुरिरामणिं बैल्वं यो बिभर्ति ॥ ४ ॥

न स सहमश्नाति न किल्बिषं कृतं नैनं दिव्यो वरुणो हन्ति भीतम् । नैनं क्रुद्धं मन्यवोऽभियन्तीरामणिं बैल्वं यो बिभर्ति ॥ नास्य त्वचं हिंसति जातवेदा न मांसमश्नाति न हन्ति तानि । शतायुरस्मि जरदष्टिः भैतीरामणिं बैल्वं यो बिभर्ति ॥ नास्य मज्जा दुष्यति जायमाना न चैलगो भवति न पापकृत्या । नान्यस्मिंधरस्तस्य कुलेषु जायत इरामणिं बैल्वं यो बिभर्ति । नास्य मर्यादा न मर्यातका गृहे न संपतव्यो न विशेत सस्मै । नास्मिन्नलक्ष्मीं कृणुते निवेशनमिरामणिं बैल्वं यो बिभर्ति ॥ नैनं रक्षो न पिशाचो हिनस्ति न जम्भको नाप्यसुरो न यक्षः । न सूचिका तस्य कुलेऽस्य जायत इरामणिं बैल्वं यो बिभर्ति ॥ ५ ॥

नैनं व्याघ्रो न वृको न द्वीपी न श्वापदं हिंसति किंचनैनम् । हस्ती नैनं क्रुद्धमुपैति भीत इरामणिं बैल्वं यो बिभर्ति ॥ नैनं सर्पो न पृदाकुर्हिनस्ति न वृश्चिको न तिरश्ची न राजा । नैनं कृष्णोऽभिसंहव इरामणिं बैल्वं यो बिभर्ति ॥ नैनं प्रमथं वरुणो हिनस्ति न मकरो न ग्रहः शिशुमारः । पारावारः शिवमस्मै कृणोतीरामणिं बैल्वं यो बिभर्ति ॥ प्रमायुकं तस्य द्विषन्तमाहुः पुष्पमिव छिन्नं सह बन्धनेन । ओघ इव प्रापात्स्यणूदात्सपत्नानिरामणिं बैल्वं यो बिभर्ति ॥ अयं मणिः प्रतिसरो जीवो जीवाय बध्यते । अनेनेन्द्रो वृत्रमहन्नृषिणा च मनीषिणा ॥ ६ ॥

सहेन्द्र द्विषतः सहस्वारातीः सहस्व पृतनायतः । नाग इव पूर्वपादाभ्यामधितिष्ठ पृतन्यतः ॥ आगादयं बैल्वो मणिः सपत्नं क्षपणो वृषा । तं पश्यन्ति कवयः सुवीरा यथा सपत्नान्समरे सहेयुः ॥ अमृतं मे मणेः मूत्रमश्विनावपि नह्यताम् । बैल्वः सह-

स्ववीर्योऽसि मा ते भर्ता रिषं मह्यम् ॥ घृतादुल्लुप्तो मधुमान्पयस्वान्धनंजयो धरुणो धारयिष्णुः । रुजन्सपत्नानधरांश्च कृण्वन्नारोह मां महते सौभगाय ॥ प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव। यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम् ॥ शासँ इत्था महाँ असीति पञ्च ॥ ७ ॥

अथातो मणिकल्पो भूतिकामः पुष्येण त्रिरात्रोपोषितो जीवतो हस्तिनो दन्तान्मात्रमुद्धृत्याग्निमुपसमाधाय परिसमुह्य परिस्तीर्य पर्युक्ष्य दक्षिणं जान्वाच्योत्तरतोऽग्नेः कंसे मणिं कृत्वा हुत्वा होमान् मणिं संपातमानयेद्धस्तिवर्चसमित्येताभिः प्रत्यृचमष्टाभिः सप्तरात्रं मधुसर्पिषोर्वासयित्वा त्रिरात्रमेकां वा बध्नीयाद्घृतादुल्लुप्त इत्येतयर्चा अत एवोत्तरं षड्भिर्हृदयशूलाग्रमणिं प्रतोदाग्रमणिं वा मुशलाग्रमणिं वा खदिरसारमणिं वा मांसौदने वासयित्वा त्रिरात्रमेकां वा बध्नीयादत एवोत्तरं चतसृभिर्वृषभशृङ्गाग्रमणिं घृतौदने वासयित्वा त्रिरात्रमेकां वा बध्नीयादत एवोत्तरमेकयैरण्डमणिं तिलौदने वासयित्वा त्रिरात्रमेकां वा बध्नीयादत एवोत्तरं षोडशभिर्बैल्वं सप्तरात्रं मधुसर्पिषि वासयित्वा त्रिरात्रमेकां वा बध्नीयाद्घृतादुल्लुप्त इत्येतयर्चा अत एवोत्तरं पञ्चभिर्महावराहस्योदोहं मुद्गौदने वासयित्वा त्रिरात्रमेकां वा बध्नीयाच्छक्तौ सति प्रथमं हस्तिच्छायायां वैयाघ्रे वाऽपि चर्मण्यासीनो वाऽपि जुहुयादासीनो वाऽपि जुहुयात् ॥ ८ ॥

इति शाङ्खायनारण्यके द्वादशोऽध्यायः ॥ १२ ॥

---

अथ त्रयोदशोऽध्यायः।

ॐ अथातो वैराग्यसंस्कृते शरीरे ब्रह्मयज्ञनिष्ठो भवेदप पुनर्मृत्युं जयति तद् ह वा आत्मा द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्या-

---

१ (८।७।४) २ (८।८।१०)

---

१ क. ग. ग. प्र. भर्ती.

सितव्य इति तमेतं वेदानुवचनेन विविदिषन्ति ब्रह्मचर्येण तपसा श्रद्धया यज्ञेनानाशकेन चेति माण्डूकेयस्तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः श्रद्धावित्तो भूत्वाऽऽत्मन्येवाऽऽत्मानं पश्येदिति माण्डव्यो योऽयं विज्ञानमयः पुरुषः प्राणेषु स एष नेति नेत्यात्मा न गृह्य इदं ब्रह्मेदं क्षत्रमिमे देवा इमे वेदा इमे लोका इमानि सर्वाणि भूतानीदं सर्वं यदयमात्मा स एष तत्त्वमसीत्यात्माऽऽत्मगम्योऽहं ब्रह्मास्मीति तदेतद्ब्रह्मापूर्वमपरमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूरित्यनुशासनमिति याज्ञवल्क्यस्तदेतन्नापुत्राय नानन्तेवासिने ब्रूयादिति य इमामद्भिः परिगृहीतां वसुमतीं धनस्य पूर्णां दद्यादिदमेव ततो भूय इदमेव ततो भूय इत्यनुशासनम् । तामेतामुपनिषदं वेदशिरो न यथा कथंचन वदेत्तदेतदृचाऽभ्युदितम् ॥ १ ॥

इति शाङ्खायनारण्यके त्रयोदशोऽध्यायः ॥ १३ ॥

---

अथ चतुर्दशोऽध्यायः ।

ॐ ऋचां मूर्धानं यजुषामुत्तमाङ्गं साम्नां शिरोऽथर्वणां मुण्डमुण्डं नाधीतेऽधीते वेदमाहुस्तमज्ञं शिरश्छित्त्वाऽसौ कुरुते कबन्धम् ॥ १ ॥

स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम् । योऽर्थज्ञ इत्सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मेति विधूतपाप्मेति ॥ २ ॥

इति शाङ्खायनारण्यके चतुर्दशोऽध्यायः ॥ १४ ॥

---

अथ पञ्चदशोऽध्यायः ।

अथ वंशः ॥ नमो ब्रह्मणे नम आचार्येभ्यो गुणाख्याच्छाङ्खायनादस्माभिरधीतं गुणाख्यः शाङ्खायनः कहोलात्कौषीतकेः कहोलः कौषीतकिरुद्दालकादारुणेरुद्दालक आरुणिः प्रियव्रतात्सोमापेः प्रियव्रतः सोमापिः सोमपात्सोमपः सोमपास्मातिवेश्यात्सोमः प्रातिवेश्यः प्रतिवेश्यात्प्रतिवेश्यो बृहद्दिवाद्बृहद्दिवः

सुश्रवसः सुश्रवा उद्दालकादुद्दालको विश्वमनसो विश्वमना व्यश्वाद्व्यश्वः साकमश्वात्साकमश्वो देवरातादेवरातो विश्वामित्राद्विश्वामित्र इन्द्रादिन्द्रः प्रजापतेः प्रजापतिर्ब्रह्मणो ब्रह्मा स्वयंभूर्नमो ब्रह्मणे नमो ब्रह्मणे ॥ १ ॥

इति शाङ्खायनारण्यके पञ्चदशोऽध्यायः ॥ १५ ॥



समाप्तोऽयं ग्रन्थः ॥



| ग्रन्थनाम । | मूल्यम् । रू० | आ० |
|---|---|---|
| ८६ विधानमाला—श्रीनृसिंहभट्टविरचिता ।... ... ... | ४ | ४ |
| ८७ अग्निहोत्रचन्द्रिका—किंजवडेकरोपाह्ववामनशास्त्रिकृता । | २ | १४ |
| ८८ निरुक्तम्—दुर्गाचार्यकृतवृत्तिसमेतम् । भागद्वयात्मकम् । ... | १६ | ४ |
| ८९ काव्यप्रकाशः—संकेताख्यटीकासमेतः । ... ... | ३ | ४ |
| ९० शाङ्खायनारण्यकम्—ऋग्वेदान्तर्गतबाष्कलशाखीयम् । ... | ० | ९ |
| ९१ गौतमप्रणीतन्यायसूत्राणि—भाष्यवृत्तिभ्यां समेतानि ।... | ४ | ८ |
| ९२ श्रीमद्भगवद्गीता—सटीकरामानुजभाष्ययुता । ... ... | ७ | ८ |
| ९३ दर्शपूर्णमासप्रकाशः—किंजवडेकरोपाह्ववामनशास्त्रिकृतः । | ६ | १२ |
| ९४ संस्कारपद्धतिः—अभ्यंकरोपाह्वभास्करशास्त्रिविरचिता । | २ | ८ |
| ९५ काश्यपशिल्पम्—महेश्वरोपदिष्टम् । ... ... ... | ३ | १ |
| ९६ करणकौस्तुभः—कृष्णदैवज्ञविरचितः ।... ... ... | ० | ९ |
| ९७ मीमांसादर्शनम—सतन्त्रवार्तिकशाबरभा० भागषट्कात्मकम् । | २५ | ९ |
| ९८ धर्मतत्त्वनिर्णयः—म. म. अभ्यंकरोपाह्ववासुदेवशास्त्रिप्रणीतः । | ० | ९ |
| ९८ धर्मतत्त्वनिर्णयपरिशिष्टम— ,, ,, | ० | १३ |
| ९९ भास्करीयबीजगणितम—नवाङ्कुराटीकासहितम् । ... | २ | ० |
| १०० प्रायश्चित्तेन्दुशेखरः—नागेशभट्टविरचितः । कुण्डार्कयुतः । | १ | १० |
| १०१ शांकरपादभूषणम्—पर्वतेइत्युपाह्वरघुनाथशास्त्रिकृतं द्विभा० | ८ | ५ |
| १०२ ब्रह्मवैवर्तपुराणम्—भागद्वयात्मकम् ।... ... ... | ९ | ४ |
| १०३ श्रुतिसाररससमुद्धरणम्—गिर्यपरनामकतोटकाचार्यप्रणीतम् । | ० | १३ |
| १०४ त्रिंशच्छ्लोकी—टिप्पणीविवृतिभ्यां समेता । धर्मशास्त्रग्रन्थः । | २ | १५· |
| १०५ आश्वलायनगृह्यसूत्रम—आश्वलायनाचार्यप्रणीतम् ।... | २ | १२ |
| १०६ दशोपनिषदः—मूलमात्रम् । ... ... ... ... | २ | ० |
| १०७ लीलावती—श्रीमद्भास्कराचार्यप्रणीता । टीकाद्वयोपेता द्विभागा । | ३ | ० |
| १०८ व्याकरणमहाभाष्यम्—प्रदीपोद्द्योतयुत (अङ्का०)प. मा. । | २ | १२ |
| श्रीमत्पद्मपुराणम्—महापुराणान्तर्गतं चतुर्भागात्मकम् । | २० | ० |
| सिद्धान्तदर्शनम—महर्षिवेदव्यासप्रणीत निरञ्जनभाष्ययुतम् । | १ | ४ |
| आधानपद्धतिः—किंजवडेकरोपाह्ववामनशास्त्रिभिः कृता । | १ | १४ |
| पश्वालम्भमीमांसा—किंजवडेकरोपाह्ववामनशास्त्रिविरचिता । | ० | १० |
| शिवभारतम्—कवीन्द्रपरमानन्दविरचितम् । ... ... | १ | ० |